॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥



# पितृयागपद्धतिः



लेखकः/सङ्ग्राहकः

अनन्तश्रीविभूषित पराङ्कुशाचार्य श्रीशठकोप यतिराज रामानुज जीयर स्वामीजी

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

# पितृयागपद्धतिः



लेखकः/सङ्ग्राहकः

अनन्तश्रीविभूषित पराङ्कुशाचार्य श्रीशठकोप यतिराज रामानुज

जीयर स्वामीजी



प्रकाशकः

श्रीशुकदेव भागवत आश्रम, (श्रीलक्ष्मीहरि मन्दिर) गैंडाकोट-१, नवलपुर

लेखक/संग्राहकः : अनन्तश्री विभूषित त्रिदण्डी
श्रीपराङ्कुशाचार्य स्वामीजी

कृतिः : पितृयागपद्धतिः

विधा : कर्मकाण्डम्

प्रकाशकः : श्रीशुकदेव भागवत आश्रम
श्रीलक्ष्मीहरि मन्दिर
गैंडाकोट न.पा.-१, नवलपुर

प्रकाशन मितिः : बृहद् आचार्य अभिनन्दन समारोह, २०७९

संस्करणम् : पञ्चमम्



प्रतिः : १५००

सहयोगः : रु. ३००/-

**ISBN : 978-9937-0-6531-3**

मुद्रणम् : क्वालिटी प्रेस
भरतपुर, चितवन, फोन : ०५६-५९४२०१

श्रीमते हयग्रीवाय नम : श्रियै नमः श्रीधराय नमः श्रीमते रामानुजाय नमः

# प्रास्ताविकम्

कर्मणामत्यावश्यकत्वम्–

कर्मब्रह्मभागयोरैकशास्त्र्यमिति (संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः) परब्रह्मप्राप्तुकामेनापि फलाभिसन्धिराहित्येनकर्मभागानुशीलनंतदुक्तनित्यनैमित्तिकादिकर्मणा-मनुष्ठानञ्चावश्यकं कर्तव्यमिति न विवादास्पदतामाटीकते।

किञ्च केवलयोः कर्मयोगज्ञानयोगयोरनिष्टावहत्वञ्च "अन्धं तमः प्रविशन्ति येऽविद्यामुपासते। ततोभूय इव ते तमो य उ विद्याया गुँ रताः" "यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्"इत्यारभ्य "नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तितः" "श्रुतिस्मृत्युदितं धर्मंयस्त्यजेद्वैष्णवाधमः । स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः" "ज्ञानं भारः क्रियां विना" इत्यादि श्रुतिस्मृतिभिश्चासङ्ख्याभिः प्रतिपादितमेव।

ईशोपनिषदि विद्याऽविद्याशब्दौ परस्परनिरपेक्षकर्मज्ञानपराविति बहुभिर्बहुत्रसप्रमाणयुक्तिकंसाधितमितिनात्रचिन्त्यते।एवञ्चशास्त्रोदितं वर्णाश्रमानुसारिकर्म वैदिकानामाचार्याणामनिवार्यमित्यायाति।

त्रिवर्गार्थ–

मिवापवर्गार्थमपि कर्मावश्यकमेवेति नापवर्गार्थिनापि तत्त्यागः शक्यक्रियः।

जगदीश्वरश्रीमन्नारायणस्यैव "मोक्षमिच्छेज्जनार्दनात्" इति मोक्षप्रदत्वस्य सिद्धत्वात् प्रीतिपूर्वकं क्रियमाणं तदीयमाराधनमेव

तत्कृपोत्पादनद्वारा मोक्षसाधनमित्यत्र न सन्देहगन्धः । तदाराधनञ्च तदाज्ञापालनपूर्वकं भवति। न हि आज्ञाच्छेदी स्वामिनं प्रसादयितुमीष्टे "श्रुतिस्मृती ममैवाज्ञा"इति स्वयमुक्तत्वात्. त एव भगवदाज्ञाभूते तस्माद्भगवदाज्ञाभूतशास्त्रोक्तं कर्मावश्यं करणीयम्। तच्च भगवदाराधनात्मकं कर्मैरण्डतैलधारावदविच्छिन्नस्मृति संततिरूपज्ञानविशेषात्मकं साक्षात् भक्तियोगं मध्ये ज्ञानयोगोत्पादनेन परंपरया वा समुत्पादयति । तादृशभक्त्या भावितो भगवान् हरिर्हरति स्वसमीपं भक्तान् स एव मोक्षः । "नहि किञ्चित्कुर्वतः शेषत्व" मिति नयेन भगवदाज्ञाविधियभूतानि तत्कैंकर्यरूपाणि वर्णाश्रमकर्माणि स्वकीयशेषत्वरक्षणार्थमेवानुतिष्ठतीति न तत्रापि कर्मत्याग प्रसङ्गः । यद्यपि निर्हेतुककृपापरवशो वशी वासुदेवो जीवकृतानि स्वल्पसुकृतानि व्याजीकृत्य "एष एव साधु कर्म कारयति यमूर्ध्वन्निनीषति "इति रीत्या स्वयमेव सुकर्मसु जीवान् प्रेरयित्वा स्वाराधनात्मककर्मपरेषु तेषु प्रपत्ति-माविष्कृत्य स्वप्राप्तौ स्वयमेवसाधनीभवतीत्यस्ति सिद्धान्तस्तथापि भगवत्कारितत्वेऽपि कर्मानुष्ठानमावश्यकमेवेति न त्यागावसरः ।

फलभेदेनाधिकारिभेदात् क्रियाविधौ भेदो भवति । तस्मात् मोक्षार्थम् भगवच्चरणारविन्दयोर्विहितभरन्यासानां भागवतानां क्रियाविधिः सामान्य त्रैवर्गिकफलाभिलाषिणामिव सर्वांशे न भवति इति युक्तियुक्तमेव । वेदादिकं शास्त्रमपि देवयानपितृयानयोर्भेदं तदधिकारिभेदञ्च स्पष्टंप्रतिपादयति तथाहि "तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहः""अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रीम्" अत्र धूमार्चिमार्गयोर्भेदस्तदधिकारिभेदश्च स्पष्टमुक्तः । भगवद् गीतायामपि "शुक्लकृष्णे गतीह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्यया ऽऽवर्तते पुनः"इति गतिभेदस्तयोरावृत्त्यनावृत्तिकरत्वञ्चोपवर्णितमस्ति।

देवयानशुक्लगत्यर्चिरादिमार्गादिशब्दाः पितृयानकृष्णगतिधूममार्गादिश ब्दाश्चानर्थान्तरभूता इति नाविदितं विदुषाम्।

किं बहुना ये भगवत्प्रपन्नास्तेषां जातेऽपि विरुद्धाचरणे दण्डने यमो नाधिकरोत्युक्तञ्च ("स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहरमधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्"इति गोप्यं भटं भणन् यमः प्रपन्नविषये स्वस्यानधिकारितां स्पष्टमाह।) तेन तापादिवैदिकसंस्कारसंस्कृतात्मनां प्रपन्नानां यममार्गो नास्तीति केवलप्रेतकल्पादिरीत्या प्रपन्नैः श्रीवैष्णवैरन्त्येष्ट्यादिकर्माणि न साधनीयानीति तदर्थम्पद्धत्यन्तरमावश्यकमिति च स्वतः सिद्धं वस्तु न निगूहनीयम्।

भगवद्भक्तप्रपन्नेतरैर्धूममार्गोऽनुसरणीयः,तैस्तु नेति गन्तव्यमार्ग भेदः स्पष्टः । ये यत्र गता यथा दत्तं तथा तत्रैवोपतिष्ठेत तस्मात् पिण्डादिदातृभिस्तथा विधेयम् । अन्यथाऽमेरिकादेशं गतस्य कृते चीनदेशसङ्केतेन पत्रादिप्रेषणौपम्यं भजेत । "पितृलोके नते सन्ति परमैकान्तिनोहि ते । साक्षाद्वैकुण्ठनाथस्य द्वारदेशावलम्बिनः" इत्युक्तत्वाद्भागवतानांपरमपदसिद्धिरितितदर्थन्दीयमानंपिण्डादिकमपि तत्संकेतेनैव देयं ये खलु पित्रादिलोकेषु तत्तत्कर्मफलमनुभवन्तो भवन्ति तत्कृते तत्संकेतेनैव देयमिति विधौ क्वाचित्को भेदो दुष्परिहरः विधिभेदप्रचारोऽन्योन्यं द्वेषोत्पादनाय स्यादित्यपि न विचारसहमेकस्मिन्नेवगृहेपितृपुत्रादावपिफलाधिकारिभेदात्क्रियाविधि वैलक्ष्यणस्य विरोधाभावस्य च बहुशोदृष्टचरत्वात्। तथाहि शिशुमरणे तत्संस्कारादावन्योविधिःप्रौढस्यान्यः,सधवाविधवयोरप्यौर्ध्वदैहिकदानादिकं भिद्यत एव । व्रतोपवासादावपि फलभेदाद्विधिरपि भिद्यतेतीमम्, तथापि न कोप्येतन्मूलकं द्वेषमनुभवति यद्यनुभवति तन्महदज्ञानावेदकं

निवारणीयमेव तद्भयेन न भेदो भवतीति शास्त्रसिद्धापलापो न तावदुचितः सचेतसां विदुषाम्।

"पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयं" इत्युक्तत्वेन महाभारतभागवतादिषु प्रामाणिकत्वेनोपन्यासात् पाञ्चरात्रागमः परमप्रमाणभूत इति बहुषु प्रबन्धेष्वागमप्रामाण्यादिषु तैस्तैराचार्यैः सोपष्टम्भं साधितत्वाल्लघुलेखेऽत्र तत्प्रामाण्यं प्रमाणसिद्धं न विशेषावसरशेषः।

ग्रन्थश्चायं"पितृयागपद्धति"रूपोरहस्याम्नायब्राह्मणमूलक पाञ्चरात्र संहितानुसारित्वेन श्रीवैष्णकर्मकाण्डेषु परमं प्रामाण्यमावहेदिति मे प्रेक्षा। अनन्तश्रीविभूषितैराचार्यवर्यैः पूर्वमेव संकलितापीयं पद्धतिस्तत्र तत्र ग्रन्थकारसन्निहितवैष्णवेष्वेवोपाकार्षीत्। सर्वदेशसर्वकालेष्वपिप्रचारोऽस्याः वैष्णव संमेलनादौ प्रदर्श्य तत्र तत्र शास्त्रमर्मज्ञैःसंप्रदायनिष्ठागरिष्ठैर्विद्वद्भिर्मुक्तकण्ठंप्रशंसितेतिप्रकाश्यमानीयते

श्रीश्रीधराचार्यकविराजदेवराजादिप्रमुखया श्रीवैष्णवसिद्धान्त-संरक्षणसमुखया श्रीवैष्णवपुस्तकप्रकाशनसमित्या सञ्चालितायाः "श्रीरामानुजग्रन्थ मालायाः" प्रथमपुष्पत्वेनेदानीं गुणैकग्रहणचतुराणां विद्याविवेकविद्योतितान्त करणानां श्रीवैष्णवानां समक्षमात्मानंप्रकाशयति। अग्रे विदुषां विवेकः प्रमाणम्।

बहुत्र प्रदर्शितायाञ्चास्यां सर्वैरपि प्रशंसितेयमिति स्थालीपुलाकन्यायेन सर्वसंमतत्वमनुमितम्। यद्यपि श्रीवैष्णवेष्वेव श्राद्धादिकर्मानुष्ठाने नैकविधतादृश्यते तथापि तदकिञ्चित्करमितिमन्यामहे। धर्माधर्मविषये कर्तव्याकर्तव्य निर्णये च शास्त्रस्यैव सर्वोत्कृष्टनिर्णायकत्वात् शास्त्रानुकूलविधेरेव विधेयत्वाच्च यादृशफलाभिलाषिभिर्यादृशाधिकारिभिः कर्तव्यत्वेन यत् कर्म शास्त्रे

प्रोक्तंतदेवकर्म तादृशफलाभिलाषिणा तयैव शास्त्रोक्तरीत्या कर्तव्यमितिरहस्यम्। प्रसङ्गेऽस्मिन्लौकिकपरंपरायाःशिष्टाचारस्यवाप्रवेशोऽपिन तावदौचित्यं भजेत। केवललौकिकपरंपराया धर्मनिर्णायकत्वे धर्माधर्म वैपरीत्यप्रसङ्गः। शिष्टत्वस्य शास्त्रवश्यमात्रनिष्ठत्वादनेवंविधेतदभावात् तदाचरणे शिष्टाचारत्वाभावःसुतरां सिद्धः।

किञ्च प्रस्तूयमानपद्धतिमनुसरन्तोऽपि तत्र भवन्तः सन्तः सन्ति शिष्टा विशिष्टा इदानीमपि, आसञ्च पुराकालेऽपि तदादाय शिष्टाचारविषयत्वं पारम्परिकत्वञ्चास्याः पद्धतेरविरुद्धमेवेति मन्यामहे। मध्येक्वाचित्कं लोपमसार्वत्रिकत्वाञ्चादाय तिरस्कारे बहूनां संस्काराणामन्येषाञ्च व्रतोपवासादीनामपि तदापत्तेः। दृश्यते च बहूनां कर्मणां क्वचित् कालप्रभावाल्लोपः शास्त्रानुसारं तेषां पुनरुद्धारश्च। एकस्मिन् देशे लुप्तमपि कर्म तदितरदेशवासिसम्पर्कात् तस्य सच्छास्त्रीयत्वञ्चावगम्य तैस्तैः पुनः स्वीकारश्चाविरुद्धः प्रसिद्धश्च सर्वदा। परं तत्र शास्त्रीयत्वमावश्यकमिति तु न विस्मरणीयम्।

दृश्यते चात्र श्रीमद्यामुनभाष्यकारदेशिकाचार्यादि-कृतविविधप्रबन्धनिबद्धप्रामाणस्यपाञ्चरात्रशास्त्रस्य भूयानादरः। तस्मात् सच्छास्त्रीयत्वात् वैष्णवानां विशेषोऽयम् इति श्रीवैष्णवमात्रविषयत्वाच्च शास्त्रनिष्ठैःसर्वैरपि भागवतैरियमेव पद्धतिरनुसर्तव्येति प्रतीयते।

अद्यत्वे वैष्णवाः खलु यथाकथञ्चिन्मरणानन्तरं वैकुण्ठोत्सवं का-रयित्वा स्वपितृन्मार्गेणार्चिरादिना श्रीवैकुण्ठलोकं गतान्भावयन्तोऽपि पुनः पितृपितामहादिकान्धर्मलोकपितृलोकादौ कृतनिवासान्विनिश्चित्य श्राद्धे दक्षिणां दिशमवलोकयन्तो भवन्ति हन्त कथमियं व्याहतिः॥ समुचितपद्धति सङ्कलनाभावादिति मनुमहे।

श्रीमद्भिः स्वामिवर्यैः परमकृपया लिखितेयं पद्धतिः शुद्धा सर्वा पूर्णा च स्यादिति समितिसञ्चालकसहाय्येनानेन बहुसमभीप्सितम्। श्रीमद्ग्रन्थकाराणां, श्रीमन्निर्देशकश्रीश्रीधराचार्याणां, सम्पादनसहायकभूतयोः श्रीरामप्रपन्नशास्त्रिवासुदेवात्रेययोश्च दूरीभावाज्जनस्यास्य च विविधकार्य परवशत्वेन च यथेप्सितं नैव सम्पन्नं तथापि क्षमाशीलाविद्वांसो मनुजस्वाभा– व्यादापतितान्निवार्याननिवार्यान् वा दोषान् सपरामर्शं सूचयित्वाग्रिमसंस्करणशुद्ध्यर्थम् साहाय्यमाचरिष्यन्तीतिस्मोवयंसाशापाशाः। वैदिक मन्त्राणांसम्पादनयन्त्रे तत्तदक्षराणामभावात् न्यूनता परिलक्ष्येत, दीर्घऋकारस्याप्यभावाद् क्वचिद्धृस्वरूपेणैवोल्लेख इति विज्ञाप्यते।

अन्ते च ग्रन्थकारानाचार्यवर्यान् प्रार्थयामो यत् पाठकसौविध्यर्थ–मस्माभिः क्वचित् स्थानपरिवर्तनादिकं कृतं तत्क्षमापयिष्यन्तीति। सर्वान्ते च मुद्रणकार्यसाधकं साधकाभिधमविस्मरन्तोवयं विज्ञापयामः

साधकः सिद्धयेऽस्माकंजातः साधनसंयुतः।
इति तं धन्याभिख्याभिर्योजयामो हृदा भृशम्॥ इति

निवेदयिता भागवतविधेयो जगन्नाथशास्त्री
अध्यक्षः– वेदान्त विभागः
श्रीरामानन्दपीठ सं० म० विद्यालय कर्णघण्टा वाराणसी

# किञ्चिद्वक्तव्यम्

चिरप्रतीक्षितेयं "पितृयागपद्धतिः" परमवैदिकं श्रीवैष्णवसिद्धान्तमधितिष्ठतां "श्रुतिस्मृती ममैवाज्ञा" इत्युक्तभगवदाज्ञासु श्रद्धावतां भागवतानां पिपाशां सुदूरयन्ती श्रीश्रीवैष्णवपुस्तक प्रकाशनसमितिरूपमुदयाचलमङ्गीकृत्य समुदितेति मोदतममावहति मे मनः । सेयं पद्धतिः प्रोक्तसमित्याः सञ्चाल्यमानायाः श्रीरामानुजग्रन्थमालायाः सौगन्धसंवलिता पुष्परूपाप्रथमा च ।

सा समिति २०३१ विक्रमवत्सरस्य धनुर्मासे हिन्दुराष्ट्रे नेपालदेशे संस्थापिता क्रमेण पल्लविता च । तस्याः संघटनकाल एव सर्वसम्मत्या स्वीकृता चेयं पद्धतिः समित्याः प्रथमंप्रकाशितास्यादिति । परन्तु श्रेयांसि बहुविघ्नानीति नयेन कानिचनकारणान्यभूवन् प्रतिबन्धकत्वेन । अस्तु ।

वर्तते च सनातनवैदिकपरम्परासु नित्यनैमित्तिककर्मणामत्यधिकं महत्वम् । तत्र गृहस्थानां पितृकार्यमप्यनिवार्यकर्मत्वेनापतति । अत एवार्चिरादिगतिना श्रीमद्वैकुण्ठप्रेप्सूनां श्रीवैष्णवानां कृते संकलितेयं पद्धतिर्लोके गुरुपरम्परानुसारेण प्रचलितापि पुस्तकरुपेणोत्तरभारते ह्यदृष्टचर्येवासीदिति परमावश्यकत्वेन प्रकाश्यते । संकलनञ्चास्या बहोः कालात् पूर्वमेवास्मदीयैः परमश्रद्धेयैरुभयवेदान्तर हस्यास्वादनप्रवीणैर्विद्वद्वरैः श्रीश्रीश्रीत्रिदण्डीपराङ्कुशाचार्यस्वामिभिर्विहितम्। तेभ्यः प्रकाशनाय प्राप्येमां पद्धतिं समितिरियमात्मानं कृतकृत्यां मन्यमाना स्वस्यास्मिन्नधमर्णत्वं विज्ञापयति । अन्या अपि तै रचिता ग्रन्थाः सन्ति बहवः । तेऽपि यथासमयं प्रकाशपथमायास्यन्तीति समाशासे । ग्रन्थेऽस्मिन् परिशिष्टभागोऽपि श्राद्धकर्मणि दैनिकार्चासु चोपयुज्यत इति सन्निवेशितः । श्रीमतां पण्डितप्रवराणां श्रीश्रीधराचार्यस्वामिनां

निर्देशकत्वे सञ्चाल्यमानापीयं तेषां दूरीभावेनेतोप्यधिकां तदीय मङ्गलाशंसामभिलषन्ती समितिः सर्वान् भागवतान् विनतेन शिरसा स्वसहाय्यार्थं प्रार्थयति। तेषां सेवार्थं सुसन्नद्धामात्मानमुद्घोषयति च। अन्ते च निवेद्यन्ते गुणैकपक्षपातिनो विचक्षणा यद् ग्रन्थेऽस्मिन् विधौ मुद्रणे च यत्र कुत्रापि स्खालित्यं भवेत् तत्सूचयिष्यन्ति पुनर्मुद्रणे शोधनायेत्यलम्।

ग्रन्थसंग्रहीतारः स्वामिवर्या नेपालदेशस्य पूर्वभागे पाँचथर मण्डलान्तर्गत याशोक (रानीगाउँ) ग्रामे स्वजनुषा कौडिन्यगोत्रसम्बद्धब्राह्मणकुलं षड्भूभृन्नवचन्द्रमिते (वि०सं०१९८६) वैक्रमवत्सरे आषाढशुक्लाष्टम्यां हस्तभे समलञ्चक्रुः । एते प्रथमतो नेपालदेश एव पश्चात् काश्यादिक्षेत्रेषु च सामान्य शास्त्राण्यधिजग्मुः । ततो वृन्दावने गोवर्द्धनपीठसम्बद्धश्रीशुकाचार्य स्वामिपादद्वारा भगवति आत्मानं निक्षिप्य सरहस्यं विशिष्टाद्वैतमर्मोद्घाटन पूर्वकं तेभ्य एव स्वाचार्येभ्यः श्रीमद्भागवतमधीतवन्तः। तदैव माथुर– पराङ्कुशाचार्याणामन्येषाञ्च दाक्षिणात्यबुधानां सम्पर्कात् कर्मकाण्डपरिचयमपि लब्धवन्तः । ततो दक्षिणदेशवास्तव्यविद्वन्मूर्धन्यश्रीमद्गोपालाचार्यस्वामिपादानां सन्निधौ श्रीरामानुजसांप्रदायिकान् वादरहस्यग्रन्थान् न्यायकर्म काण्डादि विषयाँश्च सविधिसमधीत्य समुज्ज्वलं वैदुष्यमलभन्त । श्रीभाष्याध्ययनन्तु पूर्णम् श्रीबदरिकाश्रम एवैतेषां समजनि।

आबाल्याद्विरक्तिमन्तोऽप्येते पितृपादानामेकपुत्रत्वेन हठात् त्रयोदशवर्ष एव कृतोद्वाहा अभूवन्। तदनन्तरमपि स्वाभाविकवैराग्यप्रेरिता विकटाटवीमध्युष्य गोसेवनं कुर्वन्तस्तत एव कृतपलायना अध्ययनाय तत्तत्स्थानानि समगमन्। अध्ययनकाले पितृसहाय्यमपि न प्रार्थितवन्तः। यथाकथञ्चिच्छात्रजीवनंनिरवहन्।श्रूयतेवृन्दावनेदीक्षाग्रहणपूर्वक–भागवताद्यध्ययनान्तरं वैराग्यप्राबल्यादेकान्तवासेनतपसाचकालातिवाहनमिच्छन्तःक्रमशोगोवर्द्धनहरिद्वारहृषीकेश बदरिनारायणादौ विजनवनगुहादीनध्युष्य हठयोगिन इवाभवन्। ततश्च

श्रीमद्गोपालाचार्यस्वामिनां लोकोत्तरवैदुष्यवागुरयाबद्धहृदयाः पुनः श्रीसांप्रदायिकग्रन्थाध्ययनप्रवृत्ताःक्रमशो विविधशास्त्रप्रावण्यमलभन्त शिक्षादीक्षोभयाचार्याज्ञया नेपालदेशमागत्य जुहाङ्, रिडि, बाग्लुङ, त्रिवेण्यादि स्थानेषु स्थित्वास्मिन् भौतिकताप्रधानयुगेऽपि तत्र तत्र स्वप्रवचनपाटवेन श्लाघ्यतमवैदुष्येण च सर्वविधजनानाकर्षयन्तः प्रथमतः सनातनधर्मस्य तत्रापि श्रीसंप्रदायस्य विशेषतः प्रचारमकुर्वन्, कुर्वन्तश्च सन्ति । इदानीमेतेषां श्रीमुखाच्छ्रुतवेदान्तादिशास्त्रा विद्वांसो नेपालस्य विभिन्न स्थानेषु ब भूटानसिक्किमादिप्रदेशेषु चैतदीयां भाववाहिनीं प्रवाहयन्तोविराजन्ते । तत्र धवलागिरि प्रान्तनिवासिनः श्रीमुकुन्दाचार्य,श्रीश्रीधराचार्यपौडेल,जगन्नाथकण्डेल,कमलनयनरिजाल प्रभृतयोऽपि पश्चिमनेपाल एवैतेषां जन्मभूः । श्रीवैष्णवधर्मस्तम्भायमाना एतेभ्यः प्राप्तवेदान्तरहस्यका एतत्कृतामुपकृतिं कृतार्थयन्तः सन्ति ।

तेषु च श्रीधराचार्यमुकुन्दाचार्याविदानीं श्रीसंम्प्रदायाचार्यतां गतौ गतिमन्तौ च शास्त्रेषु तत्र तत्र धर्मरक्षाथर्म् संस्कृतविद्यावर्धनार्थञ्च प्रथेते इति सुतरां मोदहेतुः। श्रीमद्भागवतोपर्यपि स्वामिप्रवराणां भूयानधिकारः। प्रारम्भत एवैतेषां त्यागवृत्तिरधिकासीत्तत्र तत्र चित्रवनादौ (नारायणी अञ्चलनेपाल) भक्तान् प्रेरयित्वा मन्दिरं निर्माप्य स्वयं प्रतिष्ठाप्यापि तत्रत्यैर्महता संरम्भेण प्रार्थितत्वेऽपि नदीतटादावेकान्त एव स्थातुमिच्छन्तः सन्ति । चित्रवने मन्दिराध्यक्षतां गता अपि तद्भारं पुरुषान्तरशिरसि निचिक्षिपिषवइवावलोक्यन्ते। दीक्षितशिष्यसङ्घोप्येतेषांमहान्। "आचारः प्रथमोधर्मः" इति सिद्धान्तनिष्ठागरिष्ठा इति मनागप्याचारलोपं न सहन्ते। निस्पृहत्वं स्पष्टतया स्वविषयोपस्थापनशीलत्वं, समध्यापनव्यसनित्वं, सदाचारप्रवणत्वमुपदेशपटुत्वमित्येतद् वैशिष्ट्यमेतेषाम् । इदानीं नेपालदेशान्तर्गत लुम्बिनीप्रान्तस्य रुरुक्षेत्रे विशेषतो निवसन्तः, धर्मप्रचाराय मन्दिरादिव्यवस्थार्थञ्च चित्रवनादावपि भ्रमन्तश्च

भवन्ति । वैष्णवसम्मेलन (नेपाल) स्य श्री श्रीवैष्णवसमितेश्च (चितवन, नेपाल) संरक्षकेष्वन्यतमा एते । महतां चर्चया स्वात्मान पवित्रयितुमेवायं स्वल्पो यत्न इति नात्र विस्तरः । श्रीमन्तः स्वामिन एवमेवाग्रेऽपि समितिमेनांस्वकीयरचनाभिः पोषयिष्यन्तीति समीहमानःस्वसदृशानेवोत्तराधिकारिणोधर्मस्यास्यकृतेबहूनुपहरिष्यन्तीति समाशासे।

श्रीमद्भगवद् भागवताचार्यचरणकमलचञ्चरीकः

कविराजो देवराजशास्त्री

अध्यक्षः

वेदान्तविभाग श्रीरामानुजदर्शनमहाविद्यालय

त्रिपुराभैरवी (वाराणसी)

# विषयानुक्रमणिका


पूर्व
दीपः
विश्वक्सेनः
वरुण
कलशः
विसर्पी
अग्नि
जातवेदाः
पिण्डवेदी
हरिणी
वासुदेव
हिरण्या
सङ्कर्षण
सत्या
प्रद्युम्न
नित्यानन्दा
अनिरुद्ध
भगवत्पीठः
प्रोक्षणी
प्रणीता
पूर्णपात्र
ब्रह्मा
सहोजाः
भूः
वराह
अनन्त
कूर्म
उत्तर
पंक्तिराधाः
आज्यस्थाली
नर्यापाः
वैश्वानर
अजिराप्रभुः
विश्वेदेवा
विश्वेदेवा
आज्यस्थाली
चरुस्थाली
होता
पश्चिम

॥ श्रीः ॥
श्रीवेदपुरुषाय नमः श्रियै नमः श्रीधराय नमः
श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः
॥ श्रीमते रामानुजाय नमः ॥

# अथ पितृयागपद्धतिः

यस्य द्विरदवक्त्राद्याः पारिषद्याः परः शतम्।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥
तस्मै रामानुजार्याय नमः परमयोगिने।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥
त्रय्यन्ताः कर्मभागेन सौहार्दम् समधिश्रिताः।
मुक्तिं यद्भजनादाहुस्तमनन्तमुपास्महे ॥
कुलं पवित्रं जननी कृतार्था वसुन्धरा भाग्यवती च धन्या।
स्वर्गे स्थिता ये पितरोऽपि धन्या येषां कुले वैष्णवनामधेयः ॥

## पूर्वदिनविधिः

पूर्वदिने तीर्थस्नानविधिना स्नात्वा भगवत्समाराधनादिना पवित्रीकृतं सात्विकाहारं सकृद्भुक्त्वा सायङ्काले महाभागवत ब्राह्मणानामामन्त्रणं वासुदेवसंकर्षणप्रद्युम्ननामभिः कुर्यात्। अत्रायं प्रकारः तेषु ताम्बूलादिकं समर्प्य

**भोः वासुदेवादिस्वरूपिणो महाभागवताचार्याः श्वो दिने करिष्यमाणपितृस्वरूपि सशक्तिकभगवत्समाराधनकर्मणि**

भवन्तो मयामन्त्रिताः। युष्मानभिवादय इत्युच्चार्य साष्टाङ्गप्रणामं कुर्यात् स्वगृहमागत्याधः शायी भवेत्।

## श्राद्धविधिः प्रारम्भः

नित्यकर्माणि कृत्वा पुनः स्नात्वाऽऽगत्य ऊर्ध्वपुण्ड्रादिकं कृत्वा नूतनयज्ञोपवीतवस्त्रादिकं परिधायागतानां महाभागवतानां हस्तपादप्रक्षालनादिकं कारयित्वाऽऽसनेषु सत्कृत्य स्थापयित्वा गन्धादिभिः संपूज्य प्रणम्य आसीत। अथाचार्यो हस्तपादौ विशोध्याचम्य प्राणानायम्य उपलिप्तां भूमिं विशोध्य भगवत्संनिधौ गत्वा कर्मपात्रं कुर्यात्।

## कर्मपात्रनिर्माणविधिः

तद्यथा एकस्मिन् पात्रे चन्दनेन शंखचक्रे विलिख्य एभिर्मन्त्रैः कर्मपात्रमभिमन्त्र्य कुशखण्डान् निक्षिपेत्—

**ॐ यद्देवा देवहेडनन्देवासश्चकृमा वयम्।**
**अग्निर्म्मातस्मादेनसो विश्वान्मुञ्चत्व ँ हसः॥**
**ॐ यदि दिवा यदि नक्तमेना गुँ सि चकृमा वयम्।**
**वायुर्म्मा तस्मादेनसो विश्वान् मुञ्चत्व ँ हसः॥**
**ॐ यदि जाग्रद्यदि स्वप्नऽएना ँ सि चकृमा वयम्।**
**सूर्यो मा तस्मादेनसो विश्वान् मुञ्चत्व ँ हसः॥**

**कर्मपात्रे पवित्रं क्षिपेत् –**

**ॐ पवित्रेस्थो व्वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण**

पवित्रेण सूर्यस्यरश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥

जलं निक्षिपेत्—

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये।

शंयोरभि स्रवन्तु नः ॥

तिलान्निक्षिपेत्—

ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः।

प्रक्त्नमद्भिः पृक्तः स्वधया पितृँल्लोकान् प्रीणाहि नः स्वाहा ॥

यवान् निक्षिपेत्—

ॐ यवोसि यवयास्मद् द्वेषोयवयारातीर्द्दिवेत्वान्तरिक्षायत्वा पृथिव्यैत्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥

पुष्पं निक्षिपेत्—

ॐ श्रीश्चते लक्ष्मीश्चपत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपम-शिवनौव्व्यात्तम्।

इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥

गन्धं निक्षिपेत्—

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।

ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

अक्षतान् क्षिपेत्—

ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत।

अस्तोषत स्व भानवो विप्रा न विष्ठया मतीयोजान्विन्द्रतेहरी ॥

ततः शङ्खचक्रमुद्रे प्रदर्श्य अभिमन्त्रितजलेन यज्ञीयद्रव्यं यागभूमिं यजमानञ्चाभिषिञ्चेत् ।

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

पवित्री धारणं कुर्यात् ।

## हस्ते जलाक्षतानादाय सकल्पं कुर्यात्–

हरिः ॐ तत्सत् ३ ॐ विष्णुर्विष्णुर्विष्णुः, अद्य श्रीमद्भगवतोमहापुरुषस्य श्रीविष्णोराज्ञया प्रवर्तमानस्य परार्धद्वयजीविनो ब्रह्मणो द्वितीये परार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे दिनस्यद्वितीये यामे तृतीये मुहूर्तेऽष्टमे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणे श्रीमद्रामानुजमुनि प्रादुर्भावाद् श्रीमन्नृपतिविक्रमार्कराज्याद्वा अमुक सङ्ख्याके वर्तमाने अमुकनामसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथा यथास्थानस्थितेषु सत्स्वेवं गुणगण विशेषण विशिष्टायां शुभपुण्यतिथौ जम्बुद्वीपे भारतवर्षे भरतखण्डे अमुकराज्ये अमुकनद्याः समीपे अमुकग्रामे अमुकदेवसन्निधौ वर्तमान अमुकवेदान्तर्गत अमुकशाखाध्यायी

अमुकर्षिकअमुकगोत्रोत्पन्नअमुकप्रवरःअमुकशर्माहं/वर्मा/गुप्तोहंभगवदाज्ञया भगवत्भागवताचार्य मुखोल्लासार्थङ्करिष्यमाण अस्मद् पितुः अमुकगोत्रस्य अमुकनामकस्य सत्यासमेतप्रद्युम्नस्वरुपस्य समाराधनभूते (अस्मन्मातुः अमुकगोत्रायाः अमुकनाम्न्याः प्रद्युम्नसमेतसत्यास्वरूपायाः) अस्मिन् सांवत्सरिक पितृयागकर्मणि मम पितृस्वरुपिणः श्रीमन्नारायणस्य समाराधनं दीपकलश विष्वक्सेनाराधनपूर्वकं पितृस्वरूपिणः भगवतः श्रीमन्नारायणस्य समाराधनपुरस्सरं विश्वेदेव चतुर्व्यूह पूजनपूर्वकं यज्ञपुरुषभगवतः पूजनपूर्वकं अन्नादिदानम् पिण्डदानम् तर्पणं ब्राह्मणभोजनं महाभागवताराधनम् च करिष्ये १, करिष्यामि १, करिष्यावः २, करिष्यामः३

## महालय पार्वण श्राद्धे विशेषः

(अमुकगोत्राणां अमुकामुकनामकानां सत्या
हिरण्याहरिणीसमेतानां प्रद्युम्नसङ्कर्षणवासुदेवस्वरुपाणां
अस्मत् पितृपितामहप्रपितामहानां सपत्नीकानां
तथा अमुकगोत्राणां अमुकामुकनामकानां सत्या
हिरण्याहरिणीसमेतानां प्रद्युम्नसङ्कर्षणवासुदेवस्वरुपाणां
मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां
समाराधनभूतेऽस्मिन् महालयापरपक्षान्तर्गत पार्वण
पितृयागकर्मणि मम पित्रादिस्वरुपिणः श्रीमन्नारायणस्य
समाराधनं विष्वक्सेनविश्वेदेवादि पूजनपूर्वकं करिष्ये १,
करिष्यामि १, करिष्यावः २, करिष्यामः३)

# गोदानविधिः

ॐ सुं सुरभ्यै नमः

इति मन्त्रेण पुष्पाक्षतागन्धवस्त्र नैवेद्यादिभिः गां पूजयित्वा आकृष्णेनेति मन्त्रेण ब्राह्मणं संपूज्य–

ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥

ततः कर्मपात्रोदकेन गां सम्प्रोक्ष्य

ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥

ॐ इरावती धेनुमती हि भूत ँ सूयवसिनी मनवेदशस्या। व्यस्क्कब्भ्ना रोदसी विष्णवे ते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहा॥कर्मपात्रजलेन गोपुच्छेन स्वशिरस्यभिषिञ्चेत्–

ॐ मनो मे तर्प्पयत व्वाचं मे तर्प्पयत प्प्राणं मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्रोत्रं मे तर्पयतात्मानंमे तर्प्पयत प्प्रजांमे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणान्मे मा वितृषन्॥

हस्ते जलाक्षतानादाय सकल्पं कुर्यात्–

हरिः ३ ॐ तत्सत् ३ ॐ विष्णुर्विष्णुर्विष्णुरद्य श्रीमद्भगवतो महापुरुषस्य श्रीविष्णोराज्ञया प्रवर्तमानस्य परार्द्धद्वयजीविनो ब्रह्मणो द्वितीये परार्द्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे दिनस्यद्वितीये यामे तृतीये मुहूर्तेऽष्टमे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे

कलियुगे कलिप्रथमचरणे (श्रीमद्रामानुजमुनि प्रादुर्भावाद्) श्रीमन्नृपतिविक्रमार्कराज्याद्वर्तमाने अमुक सङ्ख्याके अमुकनामसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकनक्षत्रे अमुकयोगेअमुककरणेअमुकराशिस्थिते श्रीसूर्येअमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथा यथा स्थानस्थितेषु सत्स्वेवं गुणगण विशेषेण विशिष्टायां शुभपुण्यतिथौ जम्बूद्वीपे भारतवर्षे अमुकराज्ये अमुकनद्याः समीपे अमुकग्रामे अमुकदेवसन्निधौ वर्तमानः अमुकवेदान्तर्गत अमुकशाखाध्यायी अमुकर्षिकः अमुकगोत्रोत्पन्न ...... प्रवरान्वितः अमुकशर्माहं / वर्मा / गुप्तोहं भगवदाज्ञया भगवन्मुखोल्लासार्थं मम पितुः / मातुः सांवत्सरिकपितृयागकर्मनिमित्तार्थं कृच्छ्रचान्द्रायणरूपामिमां गां / गवार्थे परिकल्पितं द्रव्यं वा अमुक गोत्रायामुकशर्मणे श्रीवैष्णवाय ब्राह्मणाय तुभ्यमहं दातुमुत्सृजे ॥

इति जलाक्षतसहितं गोपुच्छं ब्राह्मणकरे दद्यात्।

ॐ कोदात्कस्माऽअदात्कामोदात्कामायादात्।

कामो दाता कामः प्रतिग्रहीता कामै तत्ते ॥

ब्राह्मणश्च स्वस्तीत्युक्त्वा प्रतिगृह्णीयात्। सुवर्णादिद्रव्यमादाय-

अद्य कृतैतत्गोदानप्रतिष्ठार्थंम् हिरण्यादिद्रव्यम-
मुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं दातुमुत्सृजे

इति दत्वा प्रार्थयेत्

ॐस्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः।
सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे॥

इति गां ब्राह्मणञ्च प्रदक्षिणीकृत्याभिवादयेत् विप्रश्च गोपुच्छेन यजमानमभिषिञ्चेत्—

ॐ द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः व्वनस्प्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व ँ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि॥ इत्यभिषेकः।

ततो रङ्गवल्यादिभिर्भूमिं समलङ्कृत्यमण्डलस्योत्तर भागे शालग्रामस्वरूपिणः श्रीलक्ष्मीनारायणस्थानं परिकल्पयेत्, ततोदक्षिणे मण्डलमध्ये होमवेदीं कल्पयेत्। तत्र होमवेद्यादक्षिणेभागे ब्रह्मस्थानम्, परितोऽष्टदिक्ष्वष्टवसुस्थानं मण्डलस्येशाने विष्वक्सेनस्थानं पुण्याहं चेदाग्नेये होमवेदितो दक्षिणे भागे चतुर्व्यूहस्थानं व्यूहस्य पश्चिमे विश्वेदेवस्थानं व्यूहस्य पूर्वे भूस्वामिस्वरूपिणोभगवतोनारायणस्य स्थानं व्यूहस्याग्रे पिण्डवेदीं, हविरादिस्थानञ्च परिकल्प्य, अन्यान् सामग्रीं यथासंभवस्थानेषु स्थापयेत्।

## अथ पञ्चभूसंस्काराः—

ते च मण्डले दर्भैः परिसमूहनम् १, गोमयोपलेपनम् २, दर्भमूलेन वेद्यां रेखात्रयकरणम् ३, अनामिकाङ्गुष्ठाभ्याम्मृदुल्लेखन क्रमेणोद्धृत्य ऐशान्यां क्षेपणम् ४, शुद्धजलेन प्रोक्षणम् ५, इतिपञ्चसंस्काराः—

# अथ स्वस्तिवाचनम्

ॐ आनो भद्राः क्रतवो यन्तु व्विश्वतो दब्धासोऽअपरीतासऽउद्भिदः।
देवा नो यथा सद्मिद्वृधेऽअसन्नप्प्रायुवो रक्षितारो दिवे दिवे ॥
देवानां भद्रा सुमतिर्ऋजूयतान्देवाना ꣳ रातिरभिनो निवर्तताम्।
देवाना ꣳ सख्यमुपसेदिमा वयन्देवानऽआयुः प्रतिरन्तु जीवसे ॥
तान्पूर्वयानिविदाहूमहे व्वयं भगं मित्रमदितिन्दक्षमस्त्रिधम्।
अर्य्यमणं वरुण ꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥
तन्नोव्वातो मयोभुव्वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः ।
तद्ग्रावाणः सोमसुतो मयो भुवस्तदश्विना शृणुतन्धिष्ण्यायुवम् ॥
तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमयेव्वयम्।
पूषानो यथा वेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥
स्वस्तिनऽइन्द्रो वृद्धश्श्रवाः स्वस्तिनः पूषाव्विश्ववेदाः।
स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥
पृषदश्वामरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः।
अग्निर्जिह्वामनवःशूरचक्षसो विश्वेनो देवाऽअवसागमन्निह ॥
भद्रङ्कर्णेभिः शृणुयामदेवाभद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥
शतमिन्नु शरदोऽअन्ति देवायत्रानश्चक्रा जरसन्तनूनाम्।
पुत्त्रासो यत्र पितरो भवन्ति मानो मद्ध्यारीरिषतायुर्गन्तोः ॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः।
विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥
तम्पत्नीभिरनुगच्छेमदेवाः पुत्त्रैर्भ्रातृभिरुत वा हिरण्यैः।
नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽअधिरोचने दिवः ॥
द्यौः शान्तिरन्तरिक्ष ꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः

शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व ँ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि ॥

## अथ गौरसर्षपैर्दिग्रक्षणम्

पूर्वे रक्षतु गोविन्द आग्नेय्यां गरुडध्वजः ।
याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥
वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः ।
उत्तरे श्रीधरो रक्षेदैशान्यां तु गदाधरः ॥
ऊद्ध्र्वं गोवर्द्धनो रक्षेदधस्ताच्च त्रिविक्रमः ।
एवं दशदिशो रक्षेद्वासुदेवः सनातनः ॥

## अथदिक्पूजनम् -

**पूर्वे -**

ॐ पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभराग्निंपुरीष्यमङ्गिरस्वदच्छेमोग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥

**दक्षिणे -**

ॐ अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामदऽआदित्यश्चद्यौश्च सन्नते ते मे सन्नमतामदऽआपश्च वरुणश्च सन्नते ते मे सन्नमतामदः सप्तस ँ सदोऽअष्टमी भूतसाधनी । सकामाँ२ऽअध्वनस्कुरु संज्ञानमस्तु मेमुना ॥

**पश्चिमे -**

ॐ वायो येते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये ।

उत्तरे—

ॐ सोमो धेनु ँ सोमोऽअर्वन्तमासु ँ सोमो वीरङ्कर्मण्यन्ददाति । सादन्यं विदत्त्थ्य गूं सभेयम्पितृश्रवणं यो ददाशदस्मै ॥

आग्नेये—

ॐ अग्निन्दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँ२ऽआशादयादिह ॥

नैर्ऋत्ये—

ॐ कयानश्चित्रऽआभूवदूती सदावृधःसखा । कयाश चिष्ठया-वृता ।

वायव्ये—

ॐ वायुरनिलममृतमथेदम्भस्मान्त ँ शरीरम् ।

ॐ क्रतोस्मर ॐ क्लिबेस्मर ॐ कृत ँ स्मर ॥

ईशाने –

ॐ ईशावास्यमिद गूँ सर्वं यत्किञ्च जगत्यां जगत् ।

तेनत्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥

त्रिभिर्मन्त्रैर्मध्ये पूजयेत्—

ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुद याँ२ऽअजस्रम् । तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन् विश्वा भुवनानि गोपाः ॥

ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणि परिता बभूव य्यत्त्कामास्ते जुहुमस्तन्नोऽअस्तुवय ँ स्यामपतयोरयीणाम् ॥

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्यकाम्यम् । सनिं मे धामयासिष ६ स्वाहा ॥

## अथ भूपूजनम्

सर्वोपचारैः पीताक्षतैर्भूमिमावाह्य पूजयेत्–

**भो भूदेवि ! त्वामावाहयामि स्थापयामि पूजयामि,** इत्यावाह्य

**ॐ भूरसीत्यस्य प्रजापतिॠषिः प्रस्तारपङ्क्तिश्छन्दः भूमिर्देवता भूमिपूजने विनियोगः ।**

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।**

**पृथिवीं यच्छपृथिवींन्दृ ँ ह पृथिवींम्माहि ँ सीः॥**

**आगच्छ सर्वकल्याणि वसुधे लोकधारिणि !**

**पृथिवि ! ब्रह्मदत्तासि काश्यपेनाभिवन्दिते ॥**

**भूमिमावाहयाम्यद्य धारिणीं सर्वदेहिनाम् ।**

**सर्वभूतप्रतिष्ठाञ्च क्षितिं क्षोणीं सरस्वतीम् ॥**

**एहि मे वसुधे देवि वरदे भूतभाविनि ।**

**सर्वाश्रये महाभागे देववद्भयहारिणि ॥** भूमौ दण्डवत्प्रणमेत्–

अथ पञ्चोपचारपूजां कुर्यात्–**ॐ भूं भूम्यै नमः** अर्घ्यं समर्पयामि ।**ॐ पृं पृथिव्यै नमः** पाद्यं समर्पयामि । **ॐ अं अचलायै नमः** आचमनं समर्पयामि । **ॐ सं सर्वधात्र्यै** नमः स्नानं समर्पयामि **ॐ अं अनन्तायै नमः** नैवेद्यं समर्पयामि ।

ततो बद्धाञ्जलिःप्रार्थयेत्–

उपचारानिमाँस्तुभ्यं ददामि परमेश्वरि।
भक्त्या गृहाण देवेशि त्वामहं शरणं गतः॥

नमो नमो मेदिनि लोकमात–
रुर्व्यै महाशैलशिलाधरायै।
नमो नमो धारिणि लोकधात्र्यै
जगत्प्रतिष्ठे वसुधे नमोस्तु ते॥

## अथ वराहपूजनम्

ॐहुँ वराहाय नमः, भो वराह ! त्वामावाहयामि स्थापयामि पूजयामि, इत्यावाह्य

ॐ वराह इति मन्त्रस्य प्रजापति ऋषिरनुष्टुप्छन्दो वराहो देवता वराह पूजने विनियोगः।

ॐ वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो गृह मेधांश्चेत्येमे ये चेमेऽअशिमि विद्विषः॥ इति उपचारान् समर्प्य अथ प्रार्थयेत्–

द्रंष्ट्राग्रेणोद्धता गौरुदधिपरिवृता पर्वतैर्निम्नगाभिः
साकं मृत्पिण्डवत्प्राक् बृहदुरुवपुषानन्तरूपेण येन।
सोऽयं सर्वासुरारिर्मुरनरकदशास्यान्तकृत् सर्वसंस्थः।

कृष्णो विष्णुः सुरेशो नुदतु मम रिपूनादिदेवो वराहः ॥

इति नमस्कुर्यात्

## अथ अनन्तपूजनम्

ॐ भूर्भुवः स्वः अनन्ताय नमः भो अनन्त ! त्वामावाहयामि स्थापयामि पूजयामि। इत्यावाह्य

तन्मित्रस्येति मन्त्रस्य कुत्सऋषिः त्रिष्टुप्छन्दोऽनन्तो देवताऽनन्तपूजने विनियोगः।

ॐ तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपङ्कृणुते द्योरुपस्थे।
अनन्तमन्यद्रुसदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥

आवाहयिष्ये वरदमनन्तं दीप्ततेजसम्।
फणावलिगताशीर्षम् महीमण्डलधारिणम् ॥

एह्यनन्त महाभाग शेषाहे धरणीधर।
शशाङ्कशतसंकाश नीलाम्बरपरीवृत ॥

इत्यावाह्यार्घ्याद्युपचारैः संपूज्य बद्धाञ्जलिः प्रार्थयेत्—

नमोस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुवाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ॥

इति उपचारान् दत्वा प्रणमेत्

## अथकूर्मपूजनम्

ॐ कूर्माय नमः, भो कूर्म ! त्वामावाहयामि स्थापयामि पूजयामि, इत्यावाह्य

कूर्मस्त इतिसौचिकोग्निर्ऋषिर्जगतीछन्दः कूर्मो देवता कूर्मपूजने विनियोगः।

ॐकूर्मस्तऽआयुरञ्जरं यदग्ने यथा युक्तोजातवेदो नरिष्याः।

अथावहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजातः।

इत्यावाह्यार्घ्यादिभिः संपूज्य प्रार्थयेत्—

दिव्यामृतार्थे मथिते महाब्धौ देवासुरैर्वासुकिमन्दराभ्याम्।

मज्जन्तमब्धौ धृतमद्रिमङ्गे

तं कूर्मरूपं प्रणमामि भक्त्या ॥

इति उपचारान् दत्वा प्रणमेत्

## अथ दीपपूजनम्

ॐ पृष्टोदिविपृष्टोऽअग्निः पृथिव्यांपृष्टोविश्वाऽओषधीरा-विवेश। वैश्वानरः सहसापृष्टोऽअग्निः सनो दिवासरिषस्पातु नक्तम्।

ॐ स्थिरोभव वीड्वङ्गऽआशुर्भव वाज्यर्वन्।

पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ॥

ॐ कर्मसाक्षिणे दीपनारायणाय नमः आवाहयामि स्थापयामि पूजयामि।

अर्घ्यादिसर्वोपचारैः संपूज्य प्रार्थयेत्—

**नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे।**

**सहस्रनाम्नेपुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥**

## कलश पूजनम्

विष्वक्सेनपूजनार्थं आग्नेये, वरुणपूजनार्थं ईशाने, सुवर्णादिनिर्मितौ द्वौ घटौ समलङ्कृत्य संस्थाप्य घटाधारां भूमिं प्रार्थयेत्—

**ॐ भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महीत्वा।**

**उपस्थेते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे ॥** धान्यास्तरणम्-

**ॐ धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम्।**

**इन्द्र प्रातर्जुषस्वनः।** कलश स्थापनम्-

**ॐ कुम्भोवनिष्टुर्जनिताशचीभिर्यस्मिन्नग्रे योन्यांगर्भोऽअन्तः।**

**प्लाशि व्यक्तः शतधारऽउत्सोदुहेनकुम्भी स्वधां पितृभ्यः।**

**कलशे जलपूरणम्–**

**ॐ अपो देवी रुपह्वये यत्र गावः पिबन्तिनः।**

**सिन्धुभ्यः कर्त्वं ँ हविः ॥**

**कलशदृढीकरणम्–**

**ॐ स्थिरोभव वीड्वङ्गऽआशुर्भव वाज्यर्व्वन्।**

**पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ॥**

पल्लवनिक्षेपः-

ॐ अश्वत्थेवो निषदनं पर्णेवो वसतिष्कृता।

गोभाजऽइत्किलासथ यत्सनवथ पूरुषम्॥

कुशकूर्चनिक्षेपः-

ॐ पवित्रन्ते विततं ब्रह्मणस्पते

प्रभुर्गात्राणि पर्यैषि विश्वतः।

अतप्ततनु र्न तदामोऽश्नुते श्रृतासऽइद्वहन्तस्तत्समासते॥

दूर्वानिक्षेपः-

ॐ सहस्रपरमा देवी शतमूला शताङ्कुरा।

सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी॥

फलनिक्षेपः-

ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः।

बृहस्पति प्रसूतास्ता नो मुञ्चत्व ँ हसः॥

सर्वौषधी निक्षेपः-

ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा।

मनैनु बभ्रूणामह ँ शतन्धामानि सप्त च॥

पञ्चरत्न निक्षेपः

ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्।

दधद्रत्नानि दाशुषे॥

गन्धनिक्षेपः–

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टाङ्करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥

सप्त मृत्तिकानिक्षेपः—

ॐ मृत्तिके प्रतिष्ठितं सर्वं तन्मे निर्णुद मृत्तिके।
त्वया हतेन पापेन गच्छामि परमां गतिम्।

पूर्णपात्रम् :—

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

श्रीफलस्थापनम्—

ॐ आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्ल्वः।
तस्य फलानि तपसा नुदन्तु
मायान्तरायाश्च बाह्याऽअलक्ष्मीः॥

वस्त्रवेष्टनम्—

ॐ सुजातो ज्योतिषा सह शर्मवरूथमासदत्स्वः।
वासोऽअग्नेविश्वरूप ँ संव्ययस्व विभावसो॥

ततः प्रधान कलशस्य चतुर्दिक्षु चतुरोवेदानावाह्यपूजयेत्—

पूर्वे ऋग्वेदम्—

ॐ पूर्वे ऋग्वेदाय नमः ऋग्वेदं आवाहयामि स्थापयामि पूजयामि

ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥

दक्षिणे यजुर्वेदम्—

ॐ यजुर्वेदाय नमः यजुर्वेदमावाहयामि स्थापयामि पूजयामि।

ॐ इषेत्वोर्जेत्वा वायवस्थ देवोवः सविता प्रार्प्पयतु श्रेष्ठतमायकर्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्राय भागम्प्रजावती रनमीवाऽअयक्ष्मामा वस्तेनऽईशतमाघस ँ सोद्ध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि।

पश्चिमे सामवेदम्

ॐ सामवेदाय नमः सामवेदमावाहयामि स्थापयामि पूजयामि।

ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये । निहोता सत्सिबर्हिषि॥

उत्तरे अथर्ववेदम्

ॐ अथर्ववेदाय नमः अथर्ववेदमावाहयामि स्थापयामि पूजयामि॥

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तुपीतये। शंयोरभिस्रवन्तुनः।

चतुर्भ्यो वेदेभ्यो नमःसर्वोपचारान् समर्पयामि।

कलश प्रतिष्ठा—

ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ

ॐ समिमन्दधातु। विश्वेदेवासऽइह मादयन्तामोऽ३म्प्रतिष्ठ। एष वै प्रतिष्ठानाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति ॥इति पीताक्षतैः कलशप्रतिष्ठां कुर्यात्–

कलश प्रार्थना

देवदानवसंबाधे मथ्यमाने महोदधौ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवा सर्वे त्वयि स्थिताः।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा।

## अथ विश्वक्सेनपूजनम्

पुनरर्घ्यादिकं संपाद्य, कर्ता आचम्य प्राणानायाम्य, पुटकादौ तण्डुलानि निधाय आग्नेय-दिशि कलशं संस्थाप्य, पूर्णपात्रोपरि सप्तदर्भनिर्मिते कूर्चे विष्वक्सेनं पीताक्षतैरावाह्य पूजयेत्, दक्षिणाताम्बूलादिकमादाय

सर्वमंगलमांगल्यं सर्वोपद्रवनाशनम्।
वन्दे रामानुजार्यस्य नित्यं पादाम्बुजद्वयम् ॥

लक्ष्मी नाथेत्यादि च श्लोकमनुसंदध्यात्।

विनियोगः

विश्वकर्मन्निितिसूक्तस्य शाकऋषिर्विश्वकर्माविष्वक्सेनो देवता त्रिष्टुप्छन्दः विश्वक्सेनपूजने विनियोगः।

ॐ विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुतद्याम्। मुह्यन्त्वन्येऽअभितः सपत्नाऽ–इहास्माकं मघवा सूरिरस्तु॥

आवाहयामि सेनेशं सर्वविघ्नविनाशकम्॥

सूत्रवत्या समेतञ्च ब्रह्माण्डपरिपालकम्॥

आवाहयामि सेनेशं शंखचक्रगदाधरम्॥

अतसीपुष्पसंकाशं पीतवाससमच्युतम्॥

एहि मे देवदेवेश भक्तरक्षणतत्पर॥

गजाननादिसहितः सूत्रवत्या सह प्रभो॥

सूत्रवतीसहितं श्रीमन्तं विष्वक्सेनमावाहयामि स्थापयामि पूजयामि। आसनं समर्पयामि।

हस्तयोरर्घ्यं समर्पयामि पादयोःपाद्यं, मुखे, आचमनीयं, सर्वाङ्गे स्नानं, वस्त्रं, उपवीतं, गन्धं, पुष्पं, धूपं, दीपं, नैवेद्यं, सफलताम्बूलं, दक्षिणां, प्रदक्षिणां, नमस्कारं समर्पयामि, इति संपूज्य प्रार्थयेत्।

विष्वक्सेन नमस्तेऽस्तु सर्वेषां च शुभप्रद।

पुष्पाञ्जलिर्मया दत्तो गृहाण गणनायक॥

ॐ विष्वक्सेनाय विद्महे वेत्रहस्ताय धीमहि । तन्नः सेनेशः प्रचोदयात् ॥

<u>ततो विश्वक्सेनस्याष्टदिक्षु तत्पार्षदानावाह्यपूजयेत्–</u>

ईशाने ॐ गं गजानाय नमः गजाननमावाहयामि स्थापयामि पूजयामि ।

आग्नेये ॐ जं जयत्सेनाय नमः जयत्सेनमावाहयामि स्थापयामि पूजयामि ।

नैर्ऋत्ये ॐ हं हरिमुखाय नमः हरिमुखमावाहयामि स्थापयामि पूजयामि ।

वायव्ये ॐ कं कालप्रकृतये नमः कालप्रकृतिमावाहयामि स्थापयामि पूजयामि ।

पूर्वे ॐ बं बलाय नमः बलमावाहयामि स्थापयामि पूजयामि ।

दक्षिणस्यां ॐ प्रं प्रबलाय नमः प्रबलमावाहयामि स्थापयामि पूजयामि ।

पश्चिमायां ॐ विं विनायकायनमः विनायकमावाहयामि स्थापयामि पूजयामि ।

उत्तरे ॐ विं विघ्नेशाय नमः विघ्नेशमावाहयामि स्थापयामि पूजयामि ।

इत्यावाह्य अर्घ्याद्युपचारैः संपूज्य तत अञ्जलिं बद्ध्वा प्रार्थयेत्-

ॐ विघातं विघ्नानां विदधति गजास्यप्रभृतयः ।
सदस्या गीर्वाणप्रवरप्रणुता यस्य सततम् ॥
रमाभर्तुस्सेवा प्रणयनपरो यश्च नितरां ।
स विष्वक्सेनो मे वितरतु मनोवाञ्छितमदः ॥
ॐ यस्य द्विरदवक्त्राद्याः शासने स्थिरवृत्तयः ।
स मे वैकुण्ठसेनानीर्भूयात्सर्वत्र विघ्नहा ॥

इति सपरिवारं सशक्तिकं विष्वक्सेनं संपूज्य सर्वान् प्रणम्य वरुण पूजनं कुर्यात्—

## वरुण पूजनम्

ॐ इमं मे वरुण श्रुधीहवमद्या च मृडय। त्वामवस्युराचके॥ ॐ तत्वायामिब्रह्मणावन्दमानास्तदासास्तेयजमानोहविर्भिः।अहेडमानो वरुणेहवोध्युरुष ँ समानऽआयुः प्रमोषीः ।

ॐ वरुणाय नमः साङ्गं सपरिवारं सशक्तिकं वरुणमावाहयामि स्थापयामि पूजयामि ।

इत्यावाह्य सर्वोपचारैः संपूज्य प्रणम्य प्रार्थयेत्—

त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥
नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ।
सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥

इति वरुणपूजनम् कृत्वा। ब्राह्मणवरणं कुर्यात्।

## संहारन्यासः

ॐ लां नमःपराय सर्वात्मने नारायणाय नमः ।इति पादयोर्न्यसेत्।

ॐ वां नमःपराय निवृत्यात्मनेऽनिरुद्धाय नमः। इत्युपस्थेन्यसेत्।

ॐ रां नमःपराय विश्वात्मने प्रद्युम्नाय नमः। इति हृदयेन्यसेत्।

ॐ यां नमःपराय पुरुषात्मने संकर्षणाय नमः। इति नासाग्रेन्यसेत्।

ॐ षां नमःपराय परमेष्ठ्यात्मने वासुदेवाय नमः इति मूर्ध्निन्यसेत्।

इति पञ्चमन्त्रैर्ध्यानद्वारा प्राकृतपञ्चतत्वानां संहारं विधाय अग्रिमपञ्चमन्त्रैर्भगवद्ध्यानेन दिव्यतत्त्वमुत्पाद्य तेनदिव्यतत्त्वेन श्रीभगवदाराधनाकरणयोग्यं दिव्यदेहप्राप्तिं भावयेत्—

## अथ सृष्टिन्यासः

ॐ षां नमःपराय परमेष्ठ्यात्मने वासुदेवाय नमः । इति मूर्ध्निन्यसेत् ।

ॐ यां नमः पराय पुरुषात्मने संकर्षणाय नमः। इति नासाग्रेन्यसेत्।

ॐ रां नमःपराय विश्वात्मने प्रद्युम्नाय नमः। इति हृदयेन्यसेत् ।

ॐ वां नमःपराय निवृत्यात्मनेऽनिरुद्धाय नमः। इत्युपस्थेन्यसेत् ।

ॐ लां नमःपराय सर्वात्मने नारायणाय नमः। इति पादयोर्न्यसेत्।

## स्थितिन्यासः

ॐ रां नमःपराय विश्वात्मने प्रद्युम्नाय नमः । इति हृदयेन्यसेत् ।

ॐ वां नमःपराय निवृत्यात्मनेऽनिरुद्धाय नमः। इत्युपस्थेन्यसेत् ।

ॐ लां नमःपराय सर्वात्मने नारायणाय नमः ।

इति पादयोर्न्यसेत् ।

ॐ षां नमःपराय परमेष्ठ्यात्मने वासुदेवाय नमः ।

इति मूर्ध्निन्यसेत् ।

ॐ यां नमः पराय पुरुषात्मने संकर्षणाय नमः। इति नासाग्रेन्यसेत्।

अथ गुरुपरम्परानुसन्धानपूर्वकं सेवाप्रारम्भं कुर्यात्–

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

संसारसिन्धोस्तरणैकहेतून्दधे गुरून्मूर्ध्नि हरिस्वरूपान् ।
रजांसि येषां पदपङ्कजानां तीर्थाभिषेकश्रियमावहन्ति ॥

स्वशेषभूतेन मया स्वीयैः सर्वपरिच्छदैः ।
विधातुम्प्रीतिमात्मानं देवः प्रक्रमते स्वयम् ॥

कूर्मादीन्दिव्यलोकाँस्तदनुमणिमयम्मण्डपं तत्र शेषं
तस्मिन्धर्मादिपीठं तदुपरिकमलं चामरग्राहिणींश्च ।
विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयं

सेनेशं द्वारपालान्कुमुदमुखगणान्विष्णुभक्तान्प्रपद्ये ।
एवं गुरुपरम्पराम्भगवत्परिवारांश्च ध्यात्वा
तत उत्तरवाक्येनोपचारान्दद्यात् ।

## भगवदाराधनाविधिः

आवाहनम्–

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥
ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।
सभूमि गूँ सर्व्वतस्पृत्वात्त्यतिष्ठद्दशाङ्गुलम् ॥
आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मं
लक्ष्मीपतिम्भुवनकारणमप्रमयेम् ।
आद्यं सनातनतनुम्प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्रदीप्तिम् ॥
श्रीमन्नारायणाय नमः ।

श्रीमन्नारायणमावाहयामि स्थापयामि पूजयामीत्यावाहयेत्–

आसनम्–

ॐ पुरुषऽएवेद गूँ सर्वंय्यद्भूतंय्यच्च भाव्यम् ।
उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥
सद्रत्नजाम्बूनदनिर्मितम्विभो वरासनं सर्ववरप्रदायते ।

समर्पये सर्वजगन्निवासिने सुनिर्मलज्ञानधनप्रदायिने ॥
श्रीमतेनारायणाय नमः आसनं समर्पयामि ।

अर्घ्यम्- ॐ एतावानस्य महिमातोज्ज्यायाँश्च पूरुषः।
पादोऽस्य व्विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥

यः सर्वलोकस्यसमाश्रयश्च पूज्यश्च मान्यश्च दिवौकसामपि
गृह्णातु सोऽर्घ्यम्परिपूर्णकामः प्रसीदताम्ब्रह्ममहाविभूतिः ॥
श्रीमते नारायणाय नमः अर्घ्यं समर्पयामि ।

पाद्यम्-ॐ त्रिपादूर्द्ध्वमुदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततो व्विष्वङ्व्व्यक्क्रामत्साशनानशनेऽअभिः ॥

यो राजते यज्ञपतिश्च यज्ञे सर्वस्य लोकस्य शरण्यभूतः ।
यज्ञेश्वरो यज्ञवपुश्च विष्णुः पाद्यम्प्रगृह्णातु स वासुदेवः ॥
श्रीमते नारायणाय नमः पाद्यं समर्पयामि ।

आचमनीयम्- ॐ ततो विराडजायतविराजोऽअधिपूरुषः।
सजातोऽअत्यरिच्यतपश्चाद्भूमिमथो पुरः ॥

योऽसौ भवान्सर्वजगत्प्रधानो यस्य प्रसादेन भवन्ति लोकाः ।
सत्वं कुरुष्वाचमनं वरेण्य भव प्रसन्नो मयि दीननाथ ॥
श्रीमते नारायणाय नमः आचमनीयं समर्पयामि ।

स्नानीयम्- ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्यम् ।
पशूँस्ताँश्चक्रे व्वायव्यानारण्याग्राम्याश्च ये ॥

समाहृतैः स्वर्णघटैश्च स्वच्छैः स्वर्लोकस्रोतस्विनिदिव्यतीर्थैः।
स्नानं कुरुष्वाच्युतदिव्यमूर्ते देवाग्रजानान्निधनप्रदायिन् ॥
श्रीमते नारायणाय नमः स्नानं समर्पयामि। ततः पञ्चामृतस्नानं कुर्यात्–

दुग्धस्नानम्– ॐ सन्तेपया गुँ सि समुयन्तुवाजाः
सम्वृष्ण्यान्यभिमातिषाहः। आप्यायमानोऽअमृताय
सोमदिविश्रवा गुँ स्युत्तमानिधिष्व ॥
श्रीमते नारायणाय नमः दुग्धस्नानं समर्पयामि।

शुद्धोदकस्नानम् – ॐ इतोन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना।
शुद्धैरुक्थैवावृधासंशुध्या आशीर्वान्ममत्तु ॥
श्रीमते नारायणाय नमः शुद्धोदकस्नानं समर्पयामि ॥

दधिस्नानम्– ॐ दधिक्राब्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभिनो मुखाकरत्प्रणऽआयू गुँ षितारिषत् ॥ श्रीमते नारायणाय नमः दधिस्नानं समर्पयामि। दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥

ॐ तेजः पशूनां हविरिन्द्रियावत्परिश्रुता पयसा सारघं मधु।
अश्विभ्यां दुग्धम्भिषजा सरस्वत्या सुता सुताभ्याममृतसोम इन्दुः॥
ॐ श्रीमते नारायणाय नमः घृतस्नानं समर्पयामि।
घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥

मधुस्नानम्– ॐ मधुव्वाताऽऋतायते
मधुक्षरन्तिसिन्धवः। माध्वीर्नः सन्त्वोषधीः। ॐ
मधुनक्तमुतोषसो मधुमत्पार्थिव गूँ रजः। मधुद्यौरस्तुनः पिता॥
ॐ मधुमान्नोवनस्पतिर्मधुमाँ२अस्तुसूर्यः। माध्वीर्गावो भवन्तु
नः॥

ॐ श्रीमते नारायणाय नमः मधुस्नानं समर्पयामि। मधुस्नानान्ते
शुद्धोदकस्नानं समर्पयामि॥

शर्करास्नानम्– ॐ ताः शर्कराऽअभवंस्तच्छर्कराणां
शर्करात्वं। पशुरग्निऽर्यच्छर्कराभिरग्निम्। परिमृणोति
वज्रेणैवास्मिन्पशून्परिदधाति॥

ॐ श्रीमते नारायणाय नमः शर्करास्नानं समर्पयामि।
शर्करास्नानान्ते शुद्धोदकस्नानं समर्पयामि॥

वस्त्रम्– ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे।
छन्दा गुँ सिजज्ञिरेतस्माद्यजुस्तस्मादजायत॥

शुद्धस्त्वमात्मा पुरुषः पुराणो जगत्सुतत्वं सुरलोकनाथ।
वस्त्राणि गृह्णीष्व मयार्पितानि दूकूलकौशेयसुपट्टकानि॥
ॐ श्रीमते नारायणाय नमः वस्त्राणि समर्पयामि।

यज्ञोपवीतम्– ॐ तस्मादश्वाऽअजायन्त ये के चोभयादतः।
गावो ह जज्ञिरेतस्मात्तस्माज्जाताऽअजावयः॥
कार्पासतन्तूद्भवब्रह्मसूत्रं सूत्रात्मनेसर्वचराचरस्य।

समर्पये सात्वतपुङ्गवाय तेजः स्वरूपायसुखप्रदाय ॥
ॐ श्रीमते नारायणाय नमः यज्ञोपवीतं समर्पयामि ।
ऊर्ध्वपुण्ड्रम्– ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ।
तेन देवाऽअयजन्त साध्याऽऋषयश्चये ॥
ॐ श्रीमते नारायणाय नमः ऊर्ध्वपुण्ड्रं समर्पयामि ।

श्रीचन्दनम्–

आनन्दनो यः सुमतां परात्मा तापत्रयस्योपशमश्चयस्मात्
तस्मै प्रयच्छामि सुचन्दनं वै काश्मीरकर्पूरविभावितं च ॥
ॐ श्रीमते नारायणाय नमः चन्दनं समर्पयामि ।

पुष्पमालाम्– ॐ यत्पुरुषं व्यदधुः कतिधाव्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्येते ॥
यः सर्वगन्धोऽखिलविश्वरूपस्तस्मै प्रसूनानि समर्पयामि ।
कदम्बजातीबकुलोद्भवानि कुशेशयश्रीतुलसीदलानि ॥
ॐ श्रीमते नारायणाय नमः पुष्पाणि समर्पयामि ।

धूपम्– ॐ ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः ।
ऊरूतदस्य यद्वैश्यः पद्भ्या गुँ शूद्रोऽअजायत ॥
धूपं दशाङ्गं शुभगन्धकञ्च गोसर्पिषाक्तं हृदयप्रियञ्च ।
समर्पये दिव्यनभास्पदाय क्षीराब्धिजासेवितसत्पदाय ॥
ॐ श्रीमतेनारायणाय नमः दशाङ्गधूपं समर्पयामि ।

दीपम्– ॐ चन्द्रमा मनसोजातश्चक्षोः सूर्योऽअजायत ।

श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥

आदित्यचन्द्राग्निप्रकाशकाय वै सदाचिदानन्दमयाव्ययाय च। स्वाज्येन युक्तं शुभवर्त्तिभूषितं दीपम्प्रयच्छामितमः प्रणाशकम् ॥ ॐ श्रीमते नारायणाय नमः दीपं दर्शयामि । ततःघृतदधिमधुकर्पूरान्वितं मधुपर्कम् भगवते निवेदयेत् ॥

यौऽसौभवांस्तिष्ठति सर्वदेहे नारायणः सर्वजगत्प्रधानः।

गृहाण चैवं सुरलोकनाथ भक्तोपनीतम्मधुपर्कसंज्ञम् ॥

ॐ श्रीमते नारायणाय नमः मधुपर्कं समर्पयामि।

नैवेद्यम्– ॐ नाभ्याऽआसीदन्तरिक्ष गूँ शीर्ष्णोद्यौः समवर्तत।

पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँऽअकल्पयन् ॥

द्विजस्त्रीणाम्भक्ते मृदुनि विदुरान्ने व्रजगवां

दधि क्षीरेसख्युः स्फुटचिपिटमुष्टौ मुररिपो।

यशोदायास्तन्ये व्रजयुवति दत्ते मधुनि ते

यथासीदामोदस्तमयमुपहारेपि कुरुताम् ॥

ॐ श्रीमते नारायणाय नमः नैवेद्यं निवेदयामि।

ताम्बूलम्– ॐ यत्पुरुषेण हविषा देवायज्ञमतन्वत।

वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥

एलादिपूगीफलचन्द्रसंयुतं प्रशस्तदेशोंद्भवसौरभास्पदम्।

ताम्बूलपत्रम्भगवन्समर्पये भवप्रवाहोपरमाय तेऽच्युत ॥

ॐ श्रीमते नारायणाय नमः ताम्बूलं समर्पयामि।

नीराजनम्– ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः।
देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥
सुवर्तिकर्पूरविदीपितेन सुवर्णपात्रे विनियोजितेन।
नीराजये त्वामहमप्रमेय दिव्येन दीपेन दिवप्रदेन ॥
ॐ श्रीमते नारायणाय नमः नीराजनं समर्पयामि।

प्रणामम्–

ॐ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्म्माणि प्प्रथमान्यासन्।
तेह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः ॥

ॐ श्रीमतेनारायणाय नमः प्रणामङ्करोमि इति साष्टाङ्गं कृत्वार्चनादिकं कुर्यात्–

## मन्त्रपुष्पाञ्जलिः

ॐ तद्विष्णोः परमम्पद गूँ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्प्रासो विपन्न्यवो जागृवा गूँ सः समिन्धते विष्णोर्यत्परमम्पदम् ॥ पर्याप्त्यानन्तरायाय सर्वस्तोमोऽतिरारात्रमुत्तममहर्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वञ्जयति हरिः ॐ शान्तिः ३

ॐ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।

ॐ वज्रनखायविद्महे तीक्ष्णदंष्ट्राय धीमहि। तन्नो नारसिंहः प्रचोदयात्।

ॐ महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि। तन्नो लक्ष्मीः प्रचोदयात्।

ॐ सुदर्शनाय विद्महे महाज्वालाय धीमहि। तन्नश्चक्रः प्रचोदयात्।

ॐ अग्निमीडे पुरोहितं यज्ञस्यदेवमृत्विजम्। होतारं रत्नधातमम्॥

ॐ इषेत्वोर्ज्जेत्वा वायवस्थदेवोवःसविता प्रार्प्पयतु श्रेष्ठतमायकर्म्मणे।

ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये निहोतासत्सि बर्हिषि॥

ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये।शंयोरभि स्रवन्तुनः॥

ॐ इत्यग्रे व्याहरेत्। नम इति पश्चात्। नारायणायेत्युपरिष्टात् ॐ इत्येकाक्षरम्। नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि। एतद्वैनारायणस्याष्टाक्षरम्पदम्। यो ह वै नारायणस्याष्टाक्षरम्पदमध्येतिअनपब्रुवः सर्वमायुरेति। विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते। ततोऽमृतत्वमश्नुत इति य एवं वेद इत्युपनिषत्।

पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून्।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च॥
सर्वधर्मांश्च सन्त्यज्य सर्वकामाँश्च साक्षरान्।
लोकविक्रान्तचरणौ शरणं ते व्रजं विभो॥

त्वमेव माता च पिता त्वमेव त्वमेव वन्धुश्च गुरुस्त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव॥
पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।

नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः॥
तस्मात्प्रणम्य प्रणिधायकायं प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्॥
मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरण भगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारा नारब्धकार्याननारब्धकार्यान् कृतान् क्रियमाणान् करिष्यमाणाँश्च सर्वानशेषतः क्षमस्व। अनादिकालप्रवृत्तं विपरीतज्ञानमात्मविषयं कृत्स्नजगद्विषयं विपरीतवृत्तञ्चाशेषविषयमद्यापि वर्त्तमानं वर्तिष्यमाणञ्च सर्वं क्षमस्व। मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थितां दैवीं गुणमयीं मायां दासभूतः शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमाङ्गतिम्।
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः॥
इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व।
सुगन्धवल्लीशतपत्रजाति सुवर्णचम्पाबकुलोद्भवानि।
गृहाण देवेश मयार्पितानि प्रभो हरे श्रीतुलसीदलानि॥

१. ॐ केशवाय नमः
२. ॐ नारायणाय नमः
३. ॐ माधवाय नमः
४. ॐ गोविन्दाय नमः

५. ॐ विष्णवे नमः
६. ॐ मधुसूदनाय नमः
७. ॐ त्रिविक्रमाय नमः
८. ॐ वामनाय नमः
९. ॐ श्रीधराय नमः
१०. ॐ हृषीकेशाय नमः
११. ॐ पद्मनाभाय नमः
१२. ॐ दामोदराय नमः
१३. ॐ वासुदेवाय नमः
१४. ॐ सङ्कर्षणाय नमः
१५. ॐ प्रद्युम्नाय नमः
१६. ॐ अनिरुद्धाय नमः
१७. ॐ पुरुषोत्तमाय नमः
१८. ॐ अधोक्षजाय नमः
१९. ॐ नारसिंहाय नमः
२०. ॐ अच्युताय नमः
२१. ॐ जर्नादनाय नमः
२२. ॐ उपेन्द्राय नमः
२३. ॐ हरये नमः
२४. ॐ श्रीकृष्णाय नमः

## श्रीकृष्णाष्टोत्तरशतनामावलिः

१. ॐ श्रीकृष्णाय नमः
२. ॐ कमलानाथाय नमः
३. ॐ वासुदेवाय नमः
४. ॐ सनातनाय नमः
५. ॐ वसुदेवात्मजाय नमः
६. ॐ पुण्याय नमः
७. ॐ लीलामानुषविग्रहाय नमः
८. ॐ श्रीवत्सकौस्तुभधराय नमः
९. ॐ यशोदावत्सलाय नमः
१०. ॐ हरये नमः
११. ॐ चतुर्भुजात्तशंखारि-
गदाखड्गाद्युदायुधाय नमः
१२. ॐ देवकीनन्दनाय नमः
१३. ॐ श्रीशाय नमः
१४. ॐ नन्दगोपप्रियात्मजाय नमः
१५. ॐ यमुनावेगसंहारिणे नमः
१६. ॐ बलभद्रप्रियानुजाय नमः
१७. ॐ पूतनाजीवितहराय नमः
१८. ॐ शकटासुरभञ्जनाय नमः
१९. ॐ नन्दव्रजजनानन्दिने नमः

२०. ॐ सच्चिदानन्दविग्रहाय नमः
२१. ॐ नवनीतविलिप्ताङ्गाय नमः
२२. ॐ नवनीतनटाय नमः
२३. ॐ अनघाय नमः
२४. ॐ नवनीतनवाराहाय नमः
२५. ॐ मुचुकुन्दप्रसादकाय नमः
२६. ॐ षोडशस्त्रीसहस्रेशाय नमः
२७. ॐ त्रिभङ्गललिताकृतये नमः
२८. ॐ शुकवागमृताब्धीन्दवे नमः
२९. ॐ गोविन्दाय नमः
३०. ॐ योगिनाम्पतये नमः
३१. ॐ वत्सवाटचराय नमः
३२. ॐ अनन्ताय नमः
३३. ॐ धेनुकासुरमर्दनाय नमः
३४. ॐ तृणीकृततृणावर्ताय नमः
३५. ॐ यमलार्जुनभञ्जनाय नमः
३६. ॐ उत्तालतालभेत्त्रे नमः
३७. ॐ तमालश्यामलाकृतये नमः
३८. ॐ गोपगोपीश्वराय नमः
३९. ॐ योगिने नमः
४०. ॐ कोटिसूर्यसमप्रभाय नमः
४१. ॐ इलापतये नमः
४२. ॐ परञ्ज्योतिषे नमः
४३. ॐ यादवेन्द्राय नमः
४४. ॐ यदूद्वहाय नमः
४५. ॐ वनमालिने नमः
४६. ॐ पीतवाससे नमः
४७. ॐ पारिजातापहारकाय नमः
४८. ॐ गोवर्धनाचलोद्धर्त्रे नमः
४९. ॐ गोपालाय नमः
५०. ॐ सर्वपालकाय नमः
५१. ॐ अजाय नमः
५२. ॐ निरञ्जनाय नमः
५३. ॐ कामजनकाय नमः
५४. ॐ कञ्जलोचनाय नमः
५५. ॐ मधुघ्ने नमः
५६. ॐ मथुरानाथाय नमः
५७. ॐ द्वारकानायकाय नमः
५८. ॐ बलिने नमः
५९. ॐ वृन्दावनान्तस्संचारिणे नमः
६०. ॐ तुलसीदामभूषणाय नमः
६१. ॐ स्यमन्तकमणेहर्त्रे नमः

६२. ॐ नरनारायणात्मकाय नमः
६३. ॐ कुब्जाकृष्टाम्बरधराय नमः
६४. ॐ मायिने नमः
६५. ॐ परमपुरुषाय नमः
६६. ॐ मुष्टिकासुरचाणूरमल्लयुद्धविशारदाय नमः
६७. ॐ संसारवैरिणे नमः
६८. ॐ कंसारये नमः
६९. ॐ मुरारये नमः
७०. ॐ नरकान्तकाय नमः
७१. ॐ अनादिब्रह्मचारिणे नमः
७२. ॐ कृष्णाव्यसनकर्षकाय नमः
७३. ॐ शिशुपालशिरश्छेत्रे नमः
७४. ॐ दुर्योधनकुलान्तकाय नमः
७५. ॐ विदुराक्रूरवरदाय नमः
७६. ॐ विश्वरूपप्रदर्शकाय नमः
७७. ॐ सत्यवाचे नमः
७८. ॐ सत्यसङ्कल्पाय नमः
७९. ॐ सत्यभामारताय नमः
८०. ॐ जयिने नमः
८१. ॐ सुभद्रापूर्वजाय नमः
८२. ॐ जिष्णवे नमः
८३. ॐ भीष्ममुक्तिप्रदायकाय नमः
८४. ॐ जगद्गुरवे नमः
८५. ॐ जगन्नाथाय नमः
८६. ॐ वेणुनादविशारदाय नमः
८७.ॐ वृषभासुरविध्वंसिने नमः
८८. ॐ बाणासुरकरान्तकाय नमः
८९. ॐ युधिष्ठिरप्रतिष्ठात्रे नमः
९०. ॐ बर्हिबर्हावतंसकाय नमः
९१. ॐ पार्थसारथये नमः
९२. ॐ अव्यक्ताय नमः
९३. ॐ गीतामृतमहोदधये नमः
९४. ॐ कालियफणमाणिक्य-रञ्जितश्रीपदाम्बुजाय नमः
९५. ॐ दामोदराय नमः
९६. ॐ यज्ञभोक्त्रे नमः
९७. ॐ दानवेन्द्रविनाशकाय नमः
९८. ॐ नारायणाय नमः
९९. ॐ परब्रह्मणे नमः
१००. ॐ पन्नगाशनवाहनाय नमः
१०१. ॐ जलक्रीडासमासक्तगोपी-

वस्त्रापहारकाय नमः

१०२. ॐ पुण्यश्लोकाय नमः

१०३. ॐ तीर्थपादाय नमः

१०४. ॐ वेदवेद्याय नमः

१०५. ॐ दयानिधये नमः

१०६. ॐ सर्वतीर्थात्मकाय नमः

१०७. ॐ सर्वग्रहरूपिणे नमः

१०८. ॐ परात्पराय नमः

१०९. ॐ श्रीकृष्णाय परब्रह्मणे नमः

११०. ॐ श्रीरुक्मिणीसत्यभामासहित-श्रीवेणीमाधवस्वामिने नमः

१११. ॐ श्रीमते नारायणाय नमः

१. ॐ श्रियै नमः

२. ॐ अमृतोद्भवायै नमः

३. ॐ कमलायै नमः

४. ॐ चन्द्रसोदर्यै नमः

५. ॐ विष्णुपत्न्यै नमः

६. ॐ वैष्णव्यै नमः

७. ॐ वरारोहायै नमः

८. ॐ हरिवल्लभायै नमः

९. ॐ शार्ङ्गिण्यै नमः

१०. ॐ देवदेविकायै नमः

११. ॐ लोकसुन्दर्यै नमः

१२. ॐ श्रीमहालक्ष्म्यै नमः

## श्रीलक्ष्म्यष्टोत्तरशतनामावली

१. ॐ प्रकृत्यै नमः

२. ॐ विकृत्यै नमः

३. ॐ विद्यायै नमः

४. ॐ सर्वभूतहितप्रदायै नमः

५. ॐ श्रद्धायै नमः

६. ॐ विभूत्यै नमः

७. ॐ सुरभ्यै नमः

८. ॐ परमात्मिकायै नमः

९. ॐ वाचे नमः

१०. ॐ पद्मालयायै नमः

११. ॐ पद्मायै नमः
१२. ॐ शुचये नमः
१३. ॐ स्वाहायै नमः
१४. ॐ स्वधायै नमः
१५. ॐ सुधायै नमः
१६. ॐ धन्यायै नमः
१७. ॐ हिरण्मय्यै नमः
१८. ॐ लक्ष्म्यै नमः
१९. ॐ नित्यपुष्टायै नमः
२०. ॐ विभावर्यै नमः
२१. ॐ अदित्यै नमः
२२. ॐ दित्यै नमः
२३. ॐ दीप्तायै नमः
२४. ॐ वसुधायै नमः
२५. ॐ वसुधारिण्यै नमः
२६. ॐ कमलायै नमः
२७. ॐ कान्तायै नमः
२८. ॐ क्षमायै नमः
२९. ॐ क्षीरोदसंभवायै नमः
३०. ॐ अनुग्रहपरायै नमः
३१. ॐ ऋद्धये नमः
३२. ॐ अनघायै नमः
३३. ॐ हरिवल्लभायै नमः
३४. ॐ अशोकायै नमः
३५. ॐ अमृतायै नमः
३६. ॐ दीप्तायै नमः
३७. ॐ लोकशोकविनाशिन्यै नमः
३८. ॐ धर्मनिलयायै नमः
३९. ॐ करुणायै नमः
४०. ॐ लोकमात्रे नमः
४१. ॐ पद्मप्रियायै नमः
४२. ॐ पद्महस्तायै नमः
४३. ॐ पद्माक्ष्यै नमः
४४. ॐ पद्मसुन्दर्यै नमः
४५. ॐ पद्मोद्भवायै नमः
४६. ॐ पद्ममुख्यै नमः
४७. ॐ पद्मनाभप्रियायै नमः
४८. ॐ रमायै नमः
४९. ॐ पद्ममालाधरायै नमः
५०. ॐ देव्यै नमः

५१. ॐ पद्मिन्यै नमः
५२. ॐ पद्मगन्धिन्यै नमः
५३. ॐ पुण्यगन्धायै नमः
५४. ॐ सुप्रसन्नायै नमः
५५. ॐ प्रसादाभिमुख्यै नमः
५६. ॐ प्रभायै नमः
५७. ॐ चन्द्रवदनायै नमः
५८. ॐ चन्द्रायै नमः
५९. ॐ चन्द्रसहोदर्यै नमः
६०. ॐ चतुर्भुजायै नमः
६१. ॐ चन्द्ररूपायै नमः
६२. ॐ इन्दिरायै नमः
६३. ॐ इन्दुशीतलायै नमः
६४. ॐ आह्लादजनन्यै नमः
६५. ॐ पुष्ट्यै नमः
६६. ॐ शिवायै नमः
६७. ॐ शिवकर्य्यै नमः
६८. ॐ सत्यै नमः
६९. ॐ विमलायै नमः
७०. ॐ विश्वजनन्यै नमः
७१. ॐ तुष्ट्यै नमः
७२. ॐ दारिद्र्यनाशिन्यै नमः
७३. ॐ प्रीतिपुष्करिण्यै नमः
७४. ॐ शान्तायै नमः
७५. ॐ शुक्लमाल्याम्बरायै नमः
७६. ॐ श्रियै नमः
७७. ॐ भास्कर्यै नमः
७८. ॐ बिल्वनिलयायै नमः
७९. ॐ वरारोहायै नमः
८०. ॐ यशस्विन्यै नमः
८१. ॐ वसुन्धरायै नमः
८२. ॐ उदाराङ्गायै नमः
८३. ॐ हरिण्यै नमः
८४. ॐ हेममालिन्यै नमः
८५. ॐ धनधान्यकर्यै नमः
८६. ॐ सिद्धये नमः
८७. ॐ स्त्रैणसौम्यायै नमः
८८. ॐ शुभप्रदायै नमः
८९. ॐ नृपवेश्मगतानन्दायै नमः
९०. ॐ वरलक्ष्म्यै नमः

९१. ॐ वसुप्रदायै नमः ९४. ॐ समुद्रतनयायै नमः
९२. ॐ शुभायै नमः ९५. ॐ जयायै नमः
९३. ॐ हिरण्यप्राकारायै नमः ९६. ॐ मङ्गलादेव्यै नमः
९७. ॐ विष्णुवक्षःस्थलस्थितायै नमः
९८. ॐ विष्णुपत्न्यै नमः १०६. ॐ ब्रह्मविष्णुशिवात्मिकायै नमः
९९. ॐ प्रसन्नाक्ष्यै नमः १०७. ॐ त्रिकालज्ञानसंपन्नायै नमः
१००. ॐ नारायणसमाश्रितायै नमः १०८. ॐ भुवनेश्वर्यै नमः
१०१. ॐ दारिद्य्रध्वंसिन्यै नमः १०९. ॐ श्रीदेव्यै नमः
१०२. ॐ देव्यै नमः ११०. ॐ भूदेव्यैः नमः
१०३. ॐ सर्वोपद्रववारिण्यै नमः १११. ॐ नीलादेव्यै नमः
१०४. ॐ नवदुर्गायै नमः ११२. ॐ गोदादेव्यै नमः
१०५. ॐ महाकाल्यै नमः
११३. ॐ श्रीरङ्गनायक्यैमहालक्ष्म्यै नमः
ॐ आधारशक्त्यादि समस्त वैकुण्ठपार्षदेभ्यो नमः
ॐ श्रीमते विष्वक्सेनाय नमः
ॐ श्रीशेषाय नमः ॐ गरुडाय नमः
ॐ श्रीसुदर्शनाय हेतिराजाय नमः
ॐ पाञ्चजन्याय शंखाधिपतये नमः
ॐ कौमोदक्यै गदाधिपतये नमः
ॐ नन्दकाय खड्गाधिपतये नमः

ॐ शार्ङ्गाय चापाधिपतये नमः
ॐ सर्वेभ्यो दिव्यायुधेभ्यो नमः
ॐ सर्वेभ्यो भगवत्परिकरेभ्यो नमः
ॐ सर्वाभ्यो भगवत्परिचारिकाभ्यो नमः

ॐ अस्मद्गुरुभ्यो नमः
ॐ अस्मत्परमगुरुभ्यो नमः
ॐ अस्मत्सर्वगुरुभ्यो नमः
ॐ श्रीमते रामानुजाय नमः
ॐ श्रीपराङ्कुशदासाय नमः
ॐ श्रीमद्यामुनमुनये नमः
ॐ श्रीराममिश्राय नमः

ॐ श्रीपुण्डरीकाक्षाय नमः
ॐ श्रीमन्नाथमुनये नमः
ॐ श्रीमते शठकोपाय नमः
ॐ श्रीमते विष्वक्सेनाय नमः
ॐ श्रियै नमः
ॐ श्रीधराय नमः

ॐ समस्तपरिवारविशिष्टाय श्रीमते नारायणाय नमः
भगवन् पितृयागार्थे प्रार्थये त्वां विशेषतः ।
तेषामनुग्रहार्थञ्च यागमाहर मेऽच्युत। बृ.ब्र.सं.अ.४.पा.४.इति।
नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे।
सहस्रनाम्ने पुरुषायशाश्वते सहस्रकोटीयुगधारिणे नमः ॥

## विश्वेदेवपूजनम्

पुरुरवार्द्रवसंज्ञकविश्वेदेवाः, पूर्वाभिमुखाः कूर्चद्वये स्थाप्याः, तानावाह्य पूजयेत्—

**ॐविश्वेदेवाः श्रृणुतेम ँ हवम्मे येऽअन्तरिक्षे यऽउपद्यविष्ठा।**
**येऽअग्निजिह्वाऽउतवा यजत्राऽआसद्यास्मिन् बर्हिषि मादयद्ध्वम् ॥**
**भो विश्वेदेवा इह व आवाहयामीमां पूजां स्वीकुरुध्वम् ।**
**ॐ अद्या[1]मुकगोत्राणाममुकामुकनाम्नामस्मत्पितृ पितामह-प्रपितामहस्वरूपाणांप्रद्युम्नसङ्कर्षणवासुदेवानां सपत्नीकानां समाराधनभूतेऽस्मिन् श्राद्धकर्म्मणि भो पुरुरवार्द्रव-संज्ञकविश्वेदेवा व आवाहयामि स्थापयामि पूजयामि।**

आसनं वोनमः। अर्घ्यं वो नमः। एवं पाद्यमाचमनीयं स्नानीयं वस्त्रमुपवीतं चन्दनं पुष्पं धूपं दीपं नैवेद्यं पुनराचमनीयं ताम्बूलं दक्षिणां प्रदक्षिणा नमस्काराँश्च वो नम।

इति सर्वोपचारान् दत्वा प्रणमेत्।

**आगता हि महाभागाः स्वागतं कृपया मयि।**
**यावच्छ्राद्धं प्रवर्तेत तावत्संनिहिता ननु ॥**

अथापरङ्कर्मपात्रं विधाय कुशजलादिकमादाय

---

१ महालये विशेष : - ॐ अद्यामुकगोत्राणाममुकामुकनाम्नां सपत्नीकानाम-स्मत्पितृपितामह प्रपितमहस्वरूपाणां तथामुकगोत्राणाममुकामुकनाम्नां सपत्नीकानामस्मन्मातामहप्रमातामह वृद्धप्रमातामहस्वरूपाणां प्रद्युम्नसङ्कर्षण वासुदेवानां समाराधनभूतेऽस्मिन् अद्य कर्तव्य महालयपरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि। भो पुरुरवार्द्रवसंज्ञक विश्वेदेवा व आवाहयामि स्थापयामि पूजयामि।

## श्राद्धसंरक्षकविष्णुपूजनम्

ॐ अद्यामुकगोत्राणाममुकामुकनाम्नामस्मत्पितृपितामहप्रपितामहस्वरूपाणां प्रद्युम्नसंकर्षणवासुदेवानां समाराधनभूतेऽस्मिन् श्राद्धकर्मणि भो श्राद्धसंरक्षक विष्णो त्वां आवाहयामि स्थापयामि पूजयामि यथालब्धोपचारैः पूजयामि। आसनार्घ्यपाद्याचमनीय–स्नान–वस्त्र–उपवीत–चन्दन–पुष्प–धूप–दीप–नैवेद्य–पुनराचमनीय–ताम्बूल–दक्षिणा–प्रदक्षिणा नमस्कारान् समर्पयामि।

## चतुर्व्यूहपूजनम्

**ॐ[२] अद्यामुकगोत्राणां अमुकामुकनाम्नाम्**
**अस्मत्पितृ पितामहप्रपितामहस्वरूपाणां**
**प्रद्युम्नसङ्कर्षणवासुदेवानां समाराधनभूतेऽस्मिन् श्राद्धकर्म्मणि**
**हरिण्यादिसहितान् वासुदेवादीनावाहयिष्ये।**

इत्युच्चार्य हस्ते पीताक्षतानादायावाहयेत्–

**आवाहयाम्यहं देवं वासुदेवं जगत्पतिम्।**
**अमृताध्मातमेघाभं विद्युत्सदृशवाससम्॥**
**एह्येहि पुण्डरीकाक्ष शरणागतवत्सल।**
**सर्वकामप्रदाचिन्त्य सर्वशक्तिबलान्वित।**
**हरिणीसहिताय वासुदेवाय नमः**

२ महालये विशेषः– ॐ अद्यामुकगोत्राणाममुकामुकनाम्नां सपत्नीकानामस्मत्पितृपितामह प्रपितामहस्वरूपाणां तथामुकगोत्राणाममुकामुकनाम्नां सपत्नीकानामस्मत्प्रमातामहवृद्धप्रमातामह–स्वरूपाणां प्रद्युम्नसङ्कर्षण वासुदेवानां समाराधनभूतेऽस्मिन् अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि हरिण्यादिसहितान् वासुदेवादीनावाहयिष्ये।

हरिणीसहितं वासुदेवमावाहयामि स्थापयामि पूजयामीत्यावाह्य पूजयेत्।

**आवाहयाम्यहं देवं सङ्कर्षणमनामयम्।**
**शशाङ्कशतसङ्काशं सजलाम्बुदवाससम्॥**
**एहि सङ्कर्षणाचिन्त्य देवभक्तजनप्रिय।**
**वाङ्मनः कायसम्भूतमलत्रितयनाशन॥**
**हिरण्यासहिताय संकर्षणाय नमः**

हिरण्यासहितं संकर्षणमावाहयामि स्थापयामि पूजयामीत्यावाह्य पूजयेत्।

**देवमावाहयाम्यद्य प्रद्युम्नमपराजितम्।**
**दूर्वाङ्कुरदलश्यामं शशाङ्कांशुसमाम्बरम्॥**
**काम कामप्रद शान्त कमनीयगुणालय।**
**प्रद्युम्नाभ्येहि देवेश प्रद्योतितचराचर॥**
**सत्यासहिताय प्रद्युम्नाय नमः**

सत्यासहितं प्रद्युम्नमावाहयामि स्थापयामि पूजयामीत्यावाह्य पूजयेत्–

**आवाहयाम्यहं देवमनिरुद्धं जगद्गुरुम्।**
**पद्मपत्राग्रसङ्काशं रक्ताम्बरविभूषणम्।**
**अनिरुद्ध त्वमभ्येहि व्याप्ताशेषचराचर।**
**सर्वेषां प्राणिनां कर्मसाक्षीभूत परात्पर॥** सर्वेषां ध्यानम्

सर्वे चतुर्भुजा ध्येयाः शङ्खचक्रगदाधराः ।
किरीटकौस्तुभधरा वैनतेयासने स्थिता ॥
प्रोद्यता इव चोद्धर्तुंम्प्राणिवृन्दं सनातनम् ॥[३]

अर्घ्यादिकं सम्पाद्य सव्येन देवतीर्थेन च पूजयेत्

ॐ अद्यामुकगोत्राणाममुकामुकनाम्नामस्मत्पितृ पितामहप्रपितामहस्वरूपाणां प्रद्युम्नसङ्कर्षण-वासुदेवानां सत्या हिरण्या हरिणी समेतानां समाराधनभूतेऽस्मिन् श्राद्धकर्म्मणि हरिण्यादि सहिता वासुदेवादयः व आसनं नमः एवमर्घ्यपाद्यमाचमनीय स्नानीयवस्त्रोपवीतगन्ध पुष्पधूपदीपनैवेद्यपुनराचमन ताम्बूलदक्षिणाप्रदक्षिणा नमस्कारा वो नमः ।

इति दत्वा,

**जितन्ते स्तोत्रं पठेत् –**

---

३ ॐ अद्यामुकगोत्राणाममुकामुकनाम्नां सपत्नीकाना मस्मत्पितृपितामह प्रपितामहस्वरूपाणां तथामुकगोत्राणाममुकामुकनाम्नां सपत्नीकाना मस्मन्मातामहप्रमातामहवृद्धप्रमातामहस्वरूपाणां प्रद्युम्नसङ्कर्षणवासुदेवानां समाराधनभूतेऽस्मिन् अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि हरिण्यादि सहिता वासुदेवादय व आसनं वो नमः एवमर्घ्यपाद्यमाचमनीय स्नानीयवस्त्रोपवीतगन्धपुष्प धूप दीपनैवेद्यपुनराचमन ताम्बूलदक्षिणाप्रदक्षिणा नमस्कारा वो नमः । इति दत्वा,

# जितन्तेस्तोत्रम्

## प्रथमोऽध्यायः

ॐ जितन्ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह ।
परानन्द परब्रह्मन् नमस्ते चतुरात्मने ॥
नमस्ते पीतवसन ! नमः कटकधारिणे ।
नमो नीलालकाबद्धवेणीसुन्दरपुङ्गव ! ॥
स्फुरद्वलयकेयूरनूपुराङ्गदभूषणैः ।
शोभनैर्भूषिताकार कल्याणगुणराशये ॥
करुणापूर्णहृदय ! शङ्खचक्रगदाधर ! ।
अमृतानन्दपूर्णाभ्यां लोचनाभ्यां विलोकय ॥
कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् ।
अपराधसहस्राणामाकरं करुणाकर ॥
कृपया मां केवलया गृहाण मथुराधिप ।
विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ॥
पिता माता सुहृद्बन्धुर्भ्रातापुत्रस्त्वमेव मे ।
विद्याधनञ्चकामश्चनान्यंकिञ्चित्त्वयाविना॥
यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे ।
तव दास्यैकभावे स्यात् सदा सर्वत्र मे रतिः ॥
मनसा कर्मणा वाचा शिरसा वा कथञ्चन ।
त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम्॥
पाहि पाहि जगन्नाथ कृपया भक्तवत्सल ।
अनाथोऽहमधन्योऽहमकृतार्थो ह्यकिञ्चनः ॥

नृशंसः पापकृत् क्रूरो वञ्चको निष्ठुरः सदा ।
भवार्णवनिमग्नं मामनन्यकरुणानिधे ॥
करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय ।
त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो ॥
मया कृतानि पापानि त्रिविधानि पुनः पुनः ।
त्वत्पादपङ्कजं प्राप्तुं नान्यत् त्वत्करुणां विना ॥
साधनानि प्रसिद्धानि यागादीन्यब्जलोचन ।
त्वदाज्ञया प्रयुक्तानि त्वामुद्दिश्य कृतानि वै ॥
भक्त्यैकलभ्यः पुरुषोत्तमो हि जगत्प्रसूतिस्थितिनाशहेतुः ।
अकिञ्चनं नान्यगतिं शरण्य गृहाण मां क्लेशिनमम्बुजाक्ष ॥
धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ।
त्वत्पादपङ्कजं साधो जीवितं दीयतां मम ॥
कामये तावकत्वेन परिचर्यासु वर्तनम् ।
नित्यं किङ्करभावेन परिगृह्णीस्व मां विभो ॥
लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥
नित्यसिद्धैः समाकीर्णम् त्वन्मयैः पाञ्चकालिकैः ।
सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभैः ॥
वापीकूपतडागैश्च वृक्षखण्डैः सुमण्डितम् ।
अप्राकृतसुरैर्वन्द्यमयुतार्कसमप्रभम् ॥
प्रकृष्टसत्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा ।
कीडन्तं रमया सार्द्धम् लीलाभूमिषु केशवम् ॥

मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।
उन्नसं चारुदशनं विम्बोष्ठञ्च शुभाननम् ॥
विशालवक्षसं श्रीशं कम्बुग्रीवं जगद्गुरुम् ।
आजानुबाहुपरिघमुन्नतांसं मधुद्विषम् ॥
तनूदरं निम्ननाभिमापीनजघनं हरिम् ।
करभोरुश्रियः कान्तं कदा द्रक्ष्यामि चक्षुषा ॥
शंखचक्रगदापद्मैरङ्कितं पादपङ्कजम् ।
शरच्चन्द्रशताक्रान्तं नखराजिविराजितम् ॥
सुरासुरैर्वन्द्यमानमृषिभिर्विदितं सदा ।
मूर्द्धानं मामकं देव तावकं मण्डयिष्यति ॥
कदा गम्भीरया वाचा श्रियायुक्तो जगत्पते ।
चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यसि ॥
कदाऽहं राजराजेन गणनाथेन नोदितः ।
चरेयम्भगवत्पादपरिचर्यानुवृत्तिषु ॥
शान्ताय सुविशुद्धाय तेजसे परमात्मने ।
नमः सर्वगुणातीतषाड्गुण्यायातिवेधसे ॥
सत्यज्ञानानन्तगुणब्रह्मणे चतुरात्मने ।
चतुः पञ्चनवव्यूहदशद्वादशमूर्तये ॥
नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे ।
नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ॥
पञ्चकालैकमनसां त्वमेव गतिरव्ययः ।
स्व महिम्नि स्थितं देवं निर्विकारं निरञ्जनम् ॥
अप्रमेयमजं विष्णुं शरणं त्वां गतोऽस्म्यहम् ।

गुणातीतं परं शान्तमब्जनाभं सुरेश्वरम् ॥
तुरीयाद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् ।
विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥
मोक्षं सालोक्यसारूप्यं प्रार्थये न धराधर ।
इच्छामि हि महाभाग कारुण्यं तव सुव्रत ॥
सकलावरणातीत किंकरोऽस्मि तवानघ ।
पुनः पुनः किंकरोऽस्मि तवाहं पुरुषोत्तम ॥
आसनाद्यनुयागान्तमर्चनं यन्मयाकृतम् ।
भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम् ॥
तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु ।
इति स्तोत्रेण देवेशं स्तुत्वा मधुविघातिनम् ॥
यागावसानसमये देवदेवस्य चक्रिणः ।
नित्यं किंकरभावेन स्वात्मानं विनिवेदयेत् ॥
इति श्रीपाञ्चरात्रागमे जितन्तेस्तोत्रे प्रथमोऽध्यायः॥

## अथ द्वितीयोऽध्यायः

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेस्तु हृषीकेश महापुरुषपूर्वज ॥
विज्ञापनमिदं देव श्रृणुष्व पुरुषोत्तम ।
नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ॥
नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः ।
ब्रह्मेशाद्यैः सुरगणैः पञ्चकालपरायणैः ॥
पूज्यसे पुण्डरीकाक्ष दिव्यैर्मन्त्रैर्महात्मभिः ।

पाषण्डधर्मसङ्कीर्णे भगवद्भक्तिवर्जिते ॥
कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते ।
कथं त्वामसमाचारः पापप्रसवभूरहम् ॥
अर्चयामि दयासिन्धो पाहि मां शरणागतम् ।
तापत्रयदवाग्नौ च दूयमानं सदा विभो ॥
पाहि मां पुण्डरीकाक्ष केवलं कृपया तव ।
जन्ममृत्युजराव्याधिदुःखसन्तप्तदेहिनम् ॥
पालयासु दृशा देव तव कारुण्यगर्भया ।
इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ।
शरीरं मम देवेश व्याधिभिः परिपीडितम् ॥
मनो मे पुण्डरीकाक्ष विषयानेव धावति ।
वाणी मम हृषीकेश मिथ्यापारुष्यदूषिता ॥
एवं साधनहीनोऽहं किं करिष्यामि केशव ।
रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा ॥
अपराधसहस्राणां सहस्रमयुतं तथा ।
अर्बुदं चाप्यसंख्येयं करुणाब्धे क्षमस्व मे ॥
यच्चापराधं कृतवानज्ञानात् पुरुषोत्तम ।
अज्ञस्य मम देवेश तत्सर्वं क्षन्तुमर्हसि ॥
अज्ञत्वादल्पशक्तित्वादालस्याद्दुष्टभावनात् ।
कृतापराधकृपणं क्षन्तुमर्हसि मां विभो ॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व मधुसूदन ॥
यज्जन्मनः प्रभृति मोहवशं गतेन

नानापराधशतमाचरितं मया ते ।
अन्तर्बहिश्चसकलं तव पश्यतोऽपि
क्षन्तुं त्वमर्हसि (च मां) हरे करुणावशेन ॥
कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥
इति श्रीपाञ्चरात्रे जितन्तेस्तोत्रे द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥
नमस्ते वासुदेवाय शान्तानन्दचिदात्मने ।
अध्यक्षाय स्वतन्त्राय निरपेक्षाय शाश्वते ॥
अच्युतायाविकाराय तेजसान्निधये नमः ।
क्लेशकर्माद्यसंस्पृष्ट पूर्णषाड्गुण्यमूर्तये ॥
त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्योजसां युगैः ।
त्रियुगाय नमस्तेऽस्तु नमस्ते चतुरात्मने ॥
प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम ।
चतुः पञ्चनवव्यूहद्वादशाक्षरमूर्तये ॥
अनेकमूर्तये तुभ्यममूर्त्तायैकमूर्त्तये ।
नारायण नमस्तेऽस्तु पुण्डरीकायतेक्षण ॥
सुभ्रू ललाट सुनस सुस्मिताधरविद्रुम ।
पीनवृत्तायतभुज श्रीवत्सकृतभूषण ॥
तनुमध्य महावक्ष पद्मनाभ नमोऽस्तुते ।
विलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज ॥

नमस्ते पीतवसन स्फुरन्मकरकुण्डल ।
स्फुरत्किरीटकेयूरहारकौस्तुभभूषण ॥
पञ्चायुध नमस्तेऽस्तु नमस्ते पाञ्चकालिक ।
पञ्चकालाय ते क्रान्तयोगक्षेमावह प्रभो ॥
नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ।
नमस्ते ब्रह्मरुद्रादिलोकयात्राप्रवर्तक ॥
जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तव सुव्रत ।
त्वञ्च स्वामी गुरुर्माता पिता च मम माधव ॥
अपि त्वां भगवन् ब्रह्मा शिवशक्रमहर्षयः ।
द्रष्टुं यष्टुमभिष्टोतुमद्यापीश नहीशिरे ॥
तापत्रयमहाग्राहभीषणे भवसागरे ।
मज्जतां नाथ नौरेषा प्रणतिस्तु त्वदर्पिता ॥
अनाथाय जगन्नाथ शरण्याशरणार्थिने ।
प्रसीद सीदते मह्यं मुह्यते भक्तवत्सल ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
तत् क्षन्तव्यं प्रपन्नानामपराधसहोह्यसि ॥
सर्वेषु देश कालेषु सर्वावस्थासु चाच्युत ।
किङ्करोऽस्मिहृषीकेशभूयोभूयोऽस्मिकिङ्करः॥
एकत्रिचतुरत्यन्त चेष्टज्येष्ठाकृतिस्थिते ।
व्यक्तषाड्गुण्यचेष्टाय चतुरात्मात्मने नमः ॥
इति श्रीपाञ्चरात्रे जितन्तेस्तोत्रे तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

जितन्ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह ।
नमस्तेऽस्तु हृषीकेश महापूरुषपूर्वज ॥
देवानां दानवानां च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥
एकस्त्वमस्य लोकस्य स्रष्टा संहारकारकः ।
अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥
संसारसागरं घोरमनन्तक्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः॥
न ते रूपन्न चाकारो नायुधानि न चास्पदम् ।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥
नैव किञ्चित् परोक्षन्ते प्रत्यक्षोऽसि न कस्यचित् ।
नैव किञ्चिदसाध्यं ते न चासिद्धोऽसि कर्हिचित् ॥
कार्याणां कारणं पूर्वंवचसां वाच्यमुत्तमम् ।
योगिनां परमां सिद्धिं परमं ते पदम्विदुः ॥
अहम् भीतोऽस्मि देवेश संसारेऽस्मिन्भयावहे ।
पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥
कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥
त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥
विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमूर्जितम् ।
जन्मान्तरेऽपि देवेश मा भूदस्य परिक्षयः ॥

दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ।
यदि नाशं न विन्देत तावतास्मि कृती सदा ॥
न कामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वञ्च सर्वजन्मसु केवलम् ॥
अज्ञानाद्यदिवाज्ञानादशुभं यत्कृतं मया ।
क्षन्तुमर्हसि देवेश दास्येन च गृहाण माम् ॥
सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।
किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः॥
इत्येवमनया स्तुत्या स्तुत्वा देवं विनोदये ।
किंकरोऽस्मीति चात्मानं देवाय विनिवेदयेत् ॥
यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ।
अज्ञस्य मम देवेश तत्सर्वं क्षन्तुमर्हसि ॥
अहंकारार्थकामेषु प्रीतिरद्यैव नश्यतु ।
त्वां प्रपन्नस्य मे सैव वर्द्धतां श्रीमति त्वयि ॥
क्वाहमत्यन्तदुर्बुद्धिः क्व नु चात्महितेक्षणम् ।
यद्धितं मम देवेश तदाज्ञापय माधव ॥
सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च ।
सार्मथ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥
उपचारापदेशेन क्रियतेऽहर्निशं मया ।
अपचारान्निमान्सर्वान्क्षमस्व पुरुषोत्तम ॥
न जाने कर्म यत् किञ्चिन्नापि लौकिकवैदिकौ ।
न निषेधविधी विष्णो तव दासोऽस्मि केवलम् ॥

सत्वम्प्रसीद भगवन् कुरुमय्यनाथे ।
विष्णो कृपां परमकारुणिकः किल त्वम् ॥
संसारसागरनिमग्नमनन्तदीनम्-
उद्धर्तुमर्हसि हरे करुणावशेन ॥
इति श्रीपाञ्चरात्रे जितन्ते स्तोत्रे चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥
नमस्ते वासुदेवाय शान्तानन्तचिदात्मने ।
अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ॥
महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम ।
सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ॥
सहस्रबाहवे तुभ्यं सहस्रनयनाय ते ।
अमूर्तये नमस्तुभ्यमेकमूर्ताय ते नमः ॥
अनेकमूर्तये तुभ्यमक्षराय च ते नमः ।
व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥
चिन्मात्ररूपिणे तुभ्यं नमस्तुर्यादिमूर्तये ।
अणिष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥
वरिष्ठाय वशिष्ठाय कनिष्ठाय नमो नमः ।
नेदिष्ठाय दविष्ठाय क्षेपिष्ठाय च ते नमः ॥
पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिणे नमः ।
कलाषोडशरूपाय सृष्टिस्थित्यन्तहेतवे ॥

नमस्ते गुणरूपाय गुणरूपानुवर्तिने ।
व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥
लोकयात्राप्रसिद्ध्यर्थम् सृष्टब्रह्मादिरूपिणे ।
नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥
आदिमध्यान्तशून्याय तद्वते च नमो नमः ।
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥
विपाकैः कर्मभिः क्लेशैरस्पृष्टवपुषे नमः ।
नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ॥
नित्यासाधारणानेकलोकरक्षपरिच्छदे ।
सच्चिदानन्दरूपाय वरेण्याय नमो नमः ॥
यजमानाय यज्ञाय यष्टव्याय नमो नमः ।
नित्यकालात्मने तुभ्यं नमः स्वाध्यायशालिने ।
नमः परमहंसाय नमः सत्वगुणाय ते ।
स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ॥
हरिर्देहभृतामात्मा परप्रकृतिरीश्वरः ।
तत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥
संसारसागरे घोरे विषयावर्त्तसंकुले ।
अपारे दुस्तरेऽगाधे वर्तेऽहं कर्मभिः स्वकैः ॥
अनाथमगतिं भीरुं दयया परया हरे ।
मामुद्धर दयासिन्धो संसाराब्धेः सुदुस्तरात् ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
तत् क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि ॥
अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।

अगतिं शरणागतं हरे कृपयाकेवलमात्मसात्कुरु ॥
जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।
त्वं च स्वामी गुरुर्माता पिता च मम माधव ॥
नाहं हित्वा प्रजानामि त्वां भजाम्येव केवलम् ।
बुद्ध्वैवं नय गोविन्द भक्त्युपायेन मां हरे ॥
त्वां विना मे प्रियो नान्यो नेदं नेदमितीति च ।
बुद्धिं नीतिं च मे देहि येन त्वामुपयाम्यहम् ॥
इति विज्ञाप्य देवेशं वैश्वदेवे स्वधामनि ।
कुर्यात्पञ्चमहायज्ञानपि गृह्योक्तकर्मणा ॥
इत्यादिसमये तस्य कथितः कमलासन ।
देवानां सारमुद्धृत्य सर्वागमसमृद्धये ॥

इति श्रीपाञ्चरात्रे महोपनिषदि ब्रह्मतन्त्रे श्रीमदष्टाक्षरकल्पे जितन्तेस्तोत्रे पञ्चमोऽध्यायः समाप्तः ।

## अथ होमविधिः

देवस्य (भगवान्का) पुरतोहस्तमात्रं चतुरस्रञ्चतुरङ्गुलं स्थण्डिलं (वेदीं) निर्माय कुशद्वयेन परिसमूह्य (बढार्नें) गोमयेनोपलिप्यस्रुवेण वा दर्भमूलेनवोल्लिख्यानामिकाङ्गुष्ठा-भ्यामुल्लेखनक्रमेण मृदमुद्धृत्य शुद्धजलेन सम्प्रोक्ष्योपरि **(माथि)** कुशानास्तीर्य कांस्यपात्रद्वयेन संपुटीकृत्याग्निमादाय स्थापयेत्–

**ॐ अग्निदूतं पुरोदधेहव्व्यवाहमुपब्ब्रुवे। देवाँ२ऽआसादयादिह॥**

अत्यन्तसमयाभावेऽत्रोक्तप्रकारेण समये सति हवनपद्धक्त्युक्तानुसारेणैवकुर्यात्–

**त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते।**

**आगच्छ भगवन्वह्ने यज्ञेऽस्मिन्सन्निधो भव॥**

इत्यग्निं निधाय तदुपरि समुद्दीपनाय काष्ठादिकं निदध्यात्।

तत अग्नेरष्टदिक्षुपूर्वादि क्रमेण पीताक्षतैरष्टवसूनावाहयेत्–

## अष्टवसुपूजनम्

**ॐअग्नयेनमः ॐजातवेदसेनमः। ॐसहोजसेनमः। ॐअजिराप्रभवे नमः। ॐवैश्वानरायनमः। ॐनर्यापसेनमः। ॐपङ्क्तिराधसेनमः। ॐ विसर्पिणे नमः । ॐ यज्ञपुरुषाय नमः** यज्ञस्य समन्तत (वरिपरि) पीताक्षतान्विकिरेत् **ॐआत्मनेनमः** इतिस्वशिरसिॐ **सर्वेभ्यो श्रीवैष्णवेभ्यो नमः** इति श्रीवैष्णवशिरस्युपरि पीताक्षतान् विकीर्य्य। अग्निं पूजयेत्—

**ॐ अग्नये कव्यवाहनाय नमः** गन्धपुष्पाक्षतादिभिरभ्यर्च्य बद्धाञ्जलिः प्रार्थयेत्–

**ॐ चत्वारिश्रृङ्गास्त्रयोऽअस्यपादा द्वे शीर्षे सप्तहस्तासोऽअस्य।**

**त्रिधाबद्धो वृषभोरोरवीति महोदेवो मर्त्याँ३ऽआविवेश॥**

तत अग्निमुखान्तं होमपूर्वतन्त्रं (कुशकण्डिका) समयानुसारेणकुर्यात्–

## हवनावश्यकवस्तूनि

आज्यदुग्धदधितण्डुलगन्धधूपदीप घण्टाष्टविधचरु–प्रोक्षणीप्रणीताज्यस्थाली चरुस्थालीध्मकुशपुष्पपूर्णपात्र परिधिस्रुक्स्रुवाव्यजनसन्दंशहसन्तिका मेक्षणपवित्रकूर्चादीनि हवनावश्यकवस्तूनि कुण्डसमीपे स्थापयेत्।

## पात्रासादनम्

अग्नेरुत्तरतः पङ्क्तिद्वयाकारेण (उत्तरतर्फ २ लाइन कुशराख्ने) दर्भानास्तीर्य तत्र पञ्चदशसमिधः प्रोक्षणीं प्रणीतां स्रुक्, स्रुवौ चाधोमुखं स्थापयेत्।

## ब्रह्मपूजनम्

ततअग्नेर्दक्षिणतस्त्रिभिर्दर्भैर्ब्रह्मासनमास्तीर्यतत्रद्वादशदर्भनिर्मितं कूर्चन्निक्षिप्य तत्र सावित्रीसहितं ब्रह्माणमावाहयेत्–

(अग्निका दक्षिणतर्फ ३ कुशको ब्रह्मासन राख्ने र १२ कुशको सावित्रीसहित ब्रह्मा बनाएर पूजा गर्ने)

**ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः। सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्च योनिमसतश्च व्विवः।ॐ सावित्रीसहिताय ब्रह्मणेनमः** सावित्रीसहितं ब्रह्माणमावाहयामि स्थापयामि पूजयामि। इति सर्वोपचारैः संपूज्य प्रणमेत्।

## जलसंस्कारः

ततः पात्राण्युत्तानानि कृत्वोत्ताने प्रोक्षणीपात्रे प्रादेशमात्रौ साग्रौ द्वौ दर्भौ पवित्रीकृत्यादभिरभ्युक्ष्य प्रोक्षणीपात्रे निधाय तत्र पीताक्षतान्निक्षिपेत्। पवित्रान्तर्हिते प्रोक्षणीपात्रेऽपोनिनीयाग्नेर्दक्षिणतः समानीय मुखसममुद्धृत्य स्वस्य पुरतः स्थापयित्वा दक्षिणहस्ताङ्गुष्ठकनिष्ठिकाभ्यामुदगग्रे पवित्रे गृहीत्वा ताभ्यां तदपः प्राक् त्रिरुत्पूय यज्ञपात्राणि त्रिः प्रोक्ष्येद्ध्मविस्रस्य त्रिः प्रोक्ष्य पूर्णपात्रसंस्कारं कुर्यात्।

(अग्निका उत्तरतर्फ टुप्पासितका दुईवटा कुशको पवित्र बनाइ जलले पखाली प्रोक्षणीपात्रमा राख्ने र तेसमै जल र अक्षता राख्ने अग्निका दक्षिणतर्फबाट ल्याइ मुख उघारी आफ्ना अगाडि राख्ने र दायाँ हातका कान्छी र बुढी औंलाले कुशका टुप्पासितका २टा पवित्रले त्यो जल ३ पटक पूर्वतर्फ छर्कने र त्यो जलले ३ पटक यज्ञपात्र र समिधामा सेचन गर्ने, अग्निको उत्तरतर्फ प्रणिता र प्रणिताको उत्तरतर्फ प्रोक्षणि पात्र स्थापना गर्ने)

**पूर्णपात्रसंस्कारः**

द्वे पवित्रे पूर्णपात्रे निधाय कनिष्ठिकाङ्गुष्ठाभ्यां पूर्णपात्रं प्राक् त्रिरुत्पूयाग्नेर्दक्षिणतःपूर्णपात्रं समानीय मुखसममुद्धृत्य ब्रह्मणः समीपे स्थापयित्वा दर्भैराच्छादयेत्।

(टुप्पासितका दुईवटा कुशको पवित्रबनाई पूर्णपात्रमा राख्ने र कान्छी र बुढी औंलाले पवित्रले ३ पटक अपद्रव्य हटाइ अग्निका दाक्षिणतर्फबाट ल्याइ मुखउघारी ब्रह्माका अगाडि

राख्ने र कुशले छोप्ने)

## आज्यसंस्कारः

तत आज्यस्थाल्यां द्वे पवित्रे निधायाग्नेः पश्चिमतः स्थितायामाज्यस्थाल्याम्पवित्रान्तर्हितायामाज्यन्निरूप्यैशान्यामङ्गारेषु निधाय ज्वलतादर्भेणावद्योतनङ्कृत्वा द्वे दर्भाग्रे नखादन्येन छित्वा प्रक्ष्याल्याज्यपात्रे निधाय पुनरपिज्वलतादर्भेण त्रिरग्निम्परिक्रम्य दर्भमैशान्याङ्क्षिपेत् । आज्यं वह्नेरवतार्याङ्गारानग्नौ क्षिप्त्वा सपवित्रेणहस्तेनाग्नेः प्रदक्षिणतः समानीयस्वस्य पुरतः स्थापयित्वा हस्तयोरङ्गुष्ठकनिष्ठिकाभ्यामुदग्रे पवित्रे गृहीत्वाऽऽज्यं त्रिरुत्पूयापद्रव्यं निरस्य पवित्रग्रन्थिं विस्र–स्यअद्भिरभ्युक्ष्य प्रागग्रे पवित्रे वह्नौ प्रक्षिपेत्–

(घिउका पात्रमा दुईवटा कुशको पवित्र राखी अग्निका पश्चिमतर्फ राखी घिउ हेरी अग्निका इशानतर्फ आगोको कोइलामाथि राख्ने र कुश सल्काइ घिउका वरिपरि घुमाइ नङले नकाटेका दुईवटा कुशका टुप्पा पखाली घिउका पात्रमा राख्ने र फेरि पनि कुश सल्काइ अग्निका वरिपरि घुमाइ कुश ईशान्यमा फाल्ने आगोबाट घिउ उतारी कोइला अग्निमा राख्ने पवित्र सहितका हातले अग्निका दायाँतर्फबाट ल्याइ आफ्ना अगाडि राख्ने र हातका कान्छी र बुढी औंलाले कुशका टुप्पासितका २टा पवित्रका फेदले ३ पटक अपवस्तु उँभोतिर फाल्ने र ति पवित्र फुकाएर पखाली अग्निमा होम्ने)

## चरुसंस्कारः

अष्टविधचरुषु यथासम्भवचरु चरुस्थाल्यां निरुप्य सम्प्रोक्ष्य ज्वलता दर्भेणावद्योतनम्पर्यग्निकरणङ्कृत्वा वह्नेर्दक्षिणतः समानीयाग्नेः पश्चिमतः कुशेषु निधाय कुशैराच्छादयेत्–

(चरुका पात्रमा प्रोक्षण गरी कुश सल्काइ उज्यालोले हेरी चरुका वरिपरि ३ खेप घुमाइ २टा पवित्र र नङले नकाटेका २टा कुशका टुप्पा पखाली चरुका पात्रमा राख्ने र फेरि पनि कुश सल्काइ अग्निका वरिपरि घुमाइ कुश ईशान्यमा फाल्ने पवित्र सहितका हातले अग्निका दक्षिणतर्फबाट ल्याइ अग्निका पश्चिमतर्फ आफ्नाअगाडि कुशमा राख्ने र हातका कान्छी र बुढी औंलाले कुशका टुप्पासितका २टा पवित्रका फेदले ३ पटक अपवस्तु उँभोतिर फाल्ने, कुशले छोप्ने)

## स्रुवसंस्कारः

स्रुवमग्नौप्रतप्य दर्भाग्रैः स्रुवाग्रन्दर्भमूलैः स्रुवमूलं दर्भमध्यैः स्रुवमध्यं सर्वतः स्रुवबिलं सम्मृज्य पुनःप्रतप्य सम्प्रोक्ष्याग्नेरुत्तरतः कुशेषु स्थापयेत् ।

(सुरो अग्निमा तताई कुशका फेदले फेदमा माझले माझमा टुप्पाले टुप्पामा सबैले सबैमा पुछेर फेरि पनि अग्निमा तताई प्रोक्षण गरी अग्निका उत्तरतर्फ ल्याई कुशमा राख्ने र पुछेको कुश अग्निमा होमने)

## परिस्तरणम्

ततो वक्ष्यमाणान् मन्त्रान् पठन् कुशैः परिस्तरणङ्कुर्यात्–

(अग्निका चारैतिर कुश ओछ्याइ कुशमा परिधि राख्ने)

**ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।**

**होतारं रत्नधातमम्** ॥ इति पूर्वदिशि

**ॐ इषेत्वोर्ज्जेत्वा वायवस्थदेवोवः सविता प्राप्र्पयतु श्रेष्ठतमायकर्मणऽआप्प्यायद्ध्मघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघश ँ सोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्य पशून्पाहि** ॥ इति दक्षिणे

**ॐ अग्नऽआयाहिवीतये गृहणानो हव्यदातये ।**

**निहोता सत्सिबर्हिषि** ॥ इति पश्चिमे

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ।**

**शंयोरभिस्रवन्तुनः** । इत्युत्तरदिशि ।

एवम् परिस्तरणङ्कृत्वा परिधिं स्थापयेत् ।

## परिधिनिधानम्

तदुपरिस्थविष्ठमुत्तराग्रं यज्ञीयदारुमयङ्कनिष्ठिकामध्यमाङ्गुष्ठस्थूलङ्कुण्डायामपरिधिम्परिदध्यात् । उत्तराग्रम्परिधिमग्ने पश्चिमतो निधाय दक्षिणतोऽणीयांसम्परिधिम्पूर्वाग्रन्निधाय उत्तरतो ह्रस्वम्परिधिम्पूर्वाग्रन्निधाय पश्चिमतो निहीतमुत्तराग्रंम्मध्यमम्परिधिं हस्तेनोपस्पृश्याग्नेः पूर्वतो दक्षिणोत्तरक्रमेण प्रागग्रे द्वे आधारसमीधे आदध्यात् ।

(अघि अग्निका चारैतिर कुश ओछ्याई तिनै कुशमाथि राखेका

परिधिमाथि अर्थात् समिधामाथि अब अगाडिका मन्त्र भन्दै प्रणिता देब्रे हातमा राखी दाहिने हातले जलका धाराले परिषेचन गर्ने)

**परिषेचनप्रकारः**

ॐ अदितेऽअनुमन्यस्व इत्यग्नेर्दक्षिणतः प्रागग्राञ्जलधारान्दद्यात्।

ॐ अनुमतेऽअनुमन्यस्व पश्चिमत उत्तराग्राञ्जलधारान्दद्यात्।

ॐ सरस्वतेऽअनुमन्यस्व इत्युत्तरतः प्रागग्राञ्जलधारान्दद्यात्।

ॐ देवसवितः प्रसुव इत्यग्नेः समन्ततो जलधारान्दद्यात्।

**अग्नेर्वैष्णवीकरणम्**

अग्निमध्ये ऋतुस्नातया लक्ष्म्यासह भगवतः संयोगं विचिन्त्य समाहितगर्भां लक्ष्मीं ध्यात्वा ततोऽग्नेरुत्पत्तिं भावयेत्। एतदेवाग्नेर्वैष्णवीकरणम्।

**अग्नेः षोडशसंस्काराः—**

१ ॐ हं अग्नयेशुचिषदे नमः स्वाहा गर्भाधानसंस्कारं सम्पादयामि।

इत्युक्त्वा प्रत्येकबारं घृतेन जुहुयात्—

२ ॐ हं अग्नयेशुचिषदे नमः स्वाहा पुंसवनसंस्कारं सम्पादयामि।

३ ॐ हं अग्नये शुचिषदे नमः स्वाहा सीमन्तोनयनसंस्कारं सम्पादयामि।

४ ॐ हं अग्नयेशुचिषदे नमः स्वाहा जातकर्मसंस्कारं सम्पादयामि।

५ ॐ हं अग्नयेशुचिषदे नमः स्वाहा नामकरणसंस्कारं सम्पादयामि।

६ ॐ हं अग्नयेशुचिषदे नमः स्वाहा उपनिष्क्रमणसंस्कारं सम्पादयामि

७ ॐ हं अग्नयेशुचिषदे नमः स्वाहा अन्नप्राशनसंस्कारं सम्पादयामि।

८ ॐ हं अग्नयेशुचिषदे नमः स्वाहा कर्णवेधसंस्कारं सम्पादयामि।

९ ॐ हं अग्नयेशुचिषदे नमः स्वाहा चूडाकरणसंस्कारं सम्पादयामि।

१० ॐ हं अग्नयेशुचिषदे नमः स्वाहा उपनयनसंस्कारं सम्पादयामि।

११ ॐ हं अग्नयेशुचिषदेनमः स्वाहासावित्रीश्रावणसंस्कारं सम्पादयामि।

१२ ॐ हं अग्नयेशुचिषदे नमः स्वाहा वेदारम्भसंस्कारं सम्पादयामि।

१३ ॐ हं अग्नयेशुचिषदे नमः स्वाहा गोदानसंस्कारं सम्पादयामि।

१४ ॐ हं अग्नयेशुचिषदे नमः स्वाहा समावर्तनसंस्कारं सम्पादयामि।

१५ ॐ हं अग्नयेशुचिषदे नमः स्वाहा स्नातकव्रतसंस्कारं सम्पादयामि।

१६ ॐ हं अग्नयेशुचिषदे नमः स्वाहा विवाह संस्कारं सम्पादयामि।

ॐ अग्निदूतम्पुरोदधे हव्यवाहमुपब्रुवे। देवाँऽआसादयादिह॥

ॐ वह्नेः षोडशसंस्कारपूर्तिरस्तु स्वाहेति संस्कारनाम्ना घृतञ्जुहुयात्।

## समिद्धोमः

ततः पञ्चदशसमिध आज्येनाभ्यज्य पुष्पाक्षतैः समलङ्कृत्य ब्रह्माणञ्चालङ्कृत्य **अस्मिन्होमकर्मणि ब्रह्मन्निध्म आधास्ये, इत्युक्ते आधत्स्वेत्य**नुज्ञाते प्रजापतिम्मनसा ध्यायन्तूष्णीङ्घृताक्ताः पञ्चदशसमिधो वह्नौ जुहुयात्।

## आज्याघारः

ततः श्रुवेणाज्यमादाय

**ॐप्रजापतये स्वाहा** इति नैर्ऋत्यादीशानान्तञ्जुहुयात्। **प्रजापतय इदन्नमम**

प्रणीतायां संस्रवं निनयेत्। एवं सर्वत्र त्यागः कर्तव्यः।

**ॐ इन्द्रायस्वाहा** इति वायव्यादाग्नेयान्तञ्जुहुयात् **इन्द्रायेदं न मम।**

**ॐ अग्नये स्वाहा** इत्यग्नेर्दक्षिणतोजुहुयात् **अग्नय इदन्न मम।**

**ॐ सोमाय स्वाहा** इत्यग्नेरुत्तरतो जुहुयात् **सोमायेदन्न मम॥**

ततः पुष्पाञ्जलिमादायाग्निम्प्रार्थयेत् ।

ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥

## पञ्च वारुणिहोमं कुर्यात्

**ॐ भूः स्वाहा ।** इदमग्नये न मम ।

**ॐ भुवः स्वाहा ।** इदं वायवे न मम ।

**ॐ स्वः स्वाहा ।** इदं सूर्याय न मम ।

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ।
यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषाँ सिप्प्रमुमुग्ध्यस्मत् ॥**

**ॐ अग्नीवरुणाभ्यां स्वाहा ।** अग्नीवरुणाभ्यामिदन्न मम ।

**ॐ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्टोऽअस्याऽउषसोव्युष्टौ ।
अवयक्ष्वनो वरुण ँ रराणोवीहि मृडीक ँ सुहवोनऽएधि ॥**

**ॐ अग्नीवरुणाभ्यां स्वाहा** अग्नीवरुणाभ्यामिदं न मम ॥

**ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वमयाऽअसि ।
अयानो यज्ञं वहास्यहानो धेहि भेषज ६ स्वाहा ॥**

**ॐ अग्नये स्वाहा** अग्नय इदन्नमम ।

**ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञिया पाशा वितता महान्तः ।
तेभिर्नोऽअद्य सवितोतद्विष्णुर्विश्वेमुञ्चन्तु मरुतः स्वर्क्काः ॥**

ॐ वरुणायस्वाहा सवित्रेस्वाहा विष्णवे स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मरुद्भ्यः स्वाहा स्वर्केभ्यः स्वाहा

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम।

ॐ उदुत्तमं वरुणपाशमस्मदवाधमं व्विमद्ध्यम ६ श्श्रथाय।

अथा व्वयमादित्त्यव्व्रते तवानागसोऽअदितयेस्याम।

ॐ वरुणाय स्वाहा वरुणाय इदन्न मम॥

इति पञ्चवारुणीहोमङ्कृत्वा ततो घृतपायसाभ्याम्, नारायणाष्टाक्षरेण चाष्टोत्तरशताहुतीर्हुत्वा द्वयमन्त्रेण पञ्चविंशति वारं हुत्वा (शक्तश्चेत् हवनपद्धतावुक्तप्रकारेण हुत्वा पुरुषसूक्त श्रीसूक्तविष्णुसूक्तभूसूक्तनीलासूक्तैर्मध्यमहोमपर्यन्तंहुत्वा) न चेत् केशवादि चतुर्विंशतिनामभिर्हुत्वा वैकुण्ठपार्षदनामभिर्जुहुयात्

## चतुर्विंशतिनाम होमविधिः

१. ॐ केशवाय नमः स्वाहा

२. ॐ नारायणाय नमः स्वाहा

३. ॐ माधवाय नमः स्वाहा

४. ॐ गोविन्दाय नमः स्वाहा

५. ॐ विष्णवे नमः स्वाहा

६. ॐ मधुसूदनाय नमः स्वाहा

७. ॐ त्रिविक्रमाय नमः स्वाहा

८. ॐ वामनाय नमः स्वाहा

९. ॐ श्रीधराय नमः स्वाहा

१०. ॐ हृषीकेशाय नमः स्वाहा

११. ॐ पद्मनाभाय नमः स्वाहा

१२. ॐ दामोदराय नमः

१३. ॐ वासुदेवाय नमः स्वाहा

१४. ॐ सङ्कर्षणाय नमः स्वाहा

१५. ॐ प्रद्युम्नाय नमः स्वाहा

१६. ॐ अनिरुद्धाय नमः स्वाहा

१७. ॐ पुरुषोत्तमाय नमः स्वाहा

१८. ॐ अधोक्षजाय नमः स्वाहा २२. ॐ उपेन्द्राय नमः स्वाहा
१९. ॐ नारसिंहाय नमः स्वाहा २३. ॐ हरये नमः स्वाहा
२०. ॐ अच्युताय नमः स्वाहा २४. ॐ श्रीकृष्णाय नमः स्वाहा
२१. ॐ जर्नादनाय नमः स्वाहा

१. ॐ श्रीदेव्यै नमः स्वाहा २. ॐ भूदेव्यै नमः स्वाहा
३. ॐ नीलादेव्यै नमः स्वाहा ४. ॐ गोदादेव्यै नमःस्वाहा
५. ॐ श्रीरङ्गनायकीमहालक्ष्म्यै नमः स्वाहा

**वैकुण्ठ पार्षद होमः**

ॐ आधारशक्त्यै नमःस्वाहा

ॐ प्रकृत्यै नमः स्वाहा

ॐ अखिल जगदाधाराय कूर्मरूपिणे नारायणाय नमः स्वाहा

ॐ अनन्ताय नागराजाय नमः स्वाहा

ॐ भूम्यै नमः स्वाहा

ॐ वैकुण्ठाय दिव्यलोकाय नमः स्वाहा

ॐ वैकुण्ठाय दिव्यजनपदाय नमः स्वाहा

ॐ वैकुण्ठाय दिव्यनगराय नमः स्वाहा

ॐ वैकुण्ठाय दिव्यविमानायनमः स्वाहा

ॐ आनन्दमयाय दिव्यमण्डपरत्नाय नमः स्वाहा

ॐ आस्तरणरूपिणे अनन्ताय नागराजाय नमः स्वाहा

ॐ धर्माय पीठपादाय नमः स्वाहा

ॐ ज्ञानाय पीठपादाय नमः स्वाहा

ॐ वैराग्याय पीठपादाय नमः स्वाहा

ॐ ऐश्वर्याय पीठपादाय नमः स्वाहा

ॐ ऋग्वेदाय पीठवाहकाय नमः स्वाहा

ॐ यजुर्वेदाय पीठवाहकाय नमःस्वाहा

ॐ सामवेदाय पीठवाहकाय नमः स्वाहा

ॐ अथर्ववेदाय पीठवाहकाय नमः स्वाहा

ॐ अधर्माय पीठगात्राय नमः स्वाहा

ॐ अज्ञानाय पीठगात्राय नमः स्वाहा

ॐ अवैराग्याय पीठगात्राय नमः स्वाहा

ॐ अनैश्वर्याय पीठगात्राय नमः स्वाहा

ॐ एभिः परिच्छिन्नतनवे सदसदात्मकाय पीठभूताय नागराजाय नमः स्वाहा

ॐ पीठस्योपरि अष्टदलपद्माय नमः स्वाहा

ॐ सोममण्डलाय नमः स्वाहा

ॐ सूर्यमण्डलाय नमः स्वाहा

ॐ वह्निमण्डलाय नमः स्वाहा

ॐ विमलायै चामरकरायै नमः स्वाहा

ॐ क्रियायै चामरकरायै नमः स्वाहा

ॐ उत्कर्षिण्यै चामरकरायै नमः स्वाहा

ॐ ज्ञानायै चामरकरायै नमः स्वाहा

ॐ प्रह्व्यै चामरकरायै नमः स्वाहा

ॐ ईशानायै चामरकरायै नमः स्वाहा

ॐ सत्यायै चामरकरायै नमः स्वाहा

ॐ योगायै चामरकरायै नमः स्वाहा

ॐ अनुग्रहायै चामरकरायै नमः स्वाहा

ॐ जगत्प्रकृतये चामरकराय नमः स्वाहा

ॐ सहस्रशीर्ष्णे अनन्ताय नमः स्वाहा

ॐ पुरतः पादपीठाय नमः स्वाहा

ॐ भगवद्पादुकाभ्यां नमः स्वाहा

ॐ अस्मद्गुरुभ्यो नमः स्वाहा

ॐ अस्मत्परमगुरुभ्यो नमः स्वाहा

ॐ अस्मत्सर्वगुरुभ्यो नमः स्वाहा

ॐ श्रीमते रामानुजाय नमःस्वाहा

ॐ श्रीपराङ्कुशदासाय नमः स्वाहा

ॐ श्रीमद्यामुनमुनये नमः स्वाहा

ॐ श्रीराममिश्राय नमः स्वाहा

ॐ श्रीपुण्डरीकाक्षाय नमः स्वाहा

ॐ श्रीमन्नाथमुनये नमः स्वाहा

ॐ श्रीमते शठकोपाय नमः स्वाहा

ॐ श्रीमते विष्वक्सेनाय नमःस्वाहा

ॐ श्रियै नमः स्वाहा

ॐ श्रीधराय नमः स्वाहा

ॐ सुदर्शनाय हेतिराजायनमः स्वाहा

ॐ पाञ्चजन्याय शंखाधिपतये नमः स्वाहा

ॐ कौमोदक्यै गदाधिपतये नमः स्वाहा

ॐ नन्दकाय खड्गाधिपतये नमः स्वाहा

ॐ शाङ्गार्य चापाधिपतये नमः स्वाहा

ॐ श्रीवत्साय श्रीनिवासाय नमः स्वाहा

ॐ कौस्तुभाय सर्वरत्नाधिपतये नमः स्वाहा

ॐ वैजयन्त्यै वनमालायै नमः स्वाहा

ॐ ह्रीं पुष्ट्यै नमः स्वाहा

ॐ ऐं सरस्वत्यै नमः स्वाहा

ॐ द्रां निद्रायै नमः स्वाहा

ॐ क्लीं कान्त्यै नमः स्वाहा

ॐ कं पृथिव्यै नमः स्वाहा

ॐ गं गरुडाय नमः स्वाहा

ॐ किरीटाय मुकुटाधिपतये नमः स्वाहा

ॐ मकराकृतिकुण्डलाभ्यां नमः स्वाहा

ॐ कण्ठिकाभरणाय नमः स्वाहा

ॐ किरीटमालायै आपीडात्मिकायै नमः स्वाहा

ॐ श्रीमत्तुलस्यै नमः स्वाहा

ॐ हाराय सर्वाभरणाधिपतये नमः स्वाहा

ॐ काञ्चीगुणोज्वलाय पीताम्बराय नमः स्वाहा

ॐ सर्वेभ्यो भगवद्भूषणेभ्यो नमः स्वाहा

ॐ सर्वेभ्यो भगवद्दिव्यायुधेभ्यो नमः स्वाहा

ॐ सर्वाभ्यो भगवत्पादसंवाहिनीभ्यो नमः स्वाहा

ॐ सर्वेभ्यो भगवत्परिकरेभ्यो नमः स्वाहा

ॐ अनन्ताय नमः स्वाहा

ॐ विष्वक्सेनाय नमः स्वाहा

ॐ सूत्रवत्यै नमः स्वाहा

ॐ गं गजाननाय नमः स्वाहा

ॐ जं जयत्सेनाय नमः स्वाहा

ॐ हं हयाननाय नमः स्वाहा

ॐ कं कालप्रकृतिसंज्ञाय नमः स्वाहा

ॐ सर्वेभ्यो विष्वक्सेनपरिजनेभ्यो नमः स्वाहा

ॐ चण्डाय नमः स्वाहा

ॐ प्रचण्डाय नमः स्वाहा

ॐ भद्राय नमः स्वाहा

ॐ सुभद्राय नमः स्वाहा

ॐ जयाय नमः स्वाहा

ॐ विजयाय नमः स्वाहा

ॐ धात्रे नमः स्वाहा

ॐ विधात्रे नमः स्वाहा

ॐ कुमुदाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ कुमुदाक्षाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ पुण्डरीकाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ वामनाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ शङ्कुकर्णाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ सर्पनेत्राय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ सुमुखाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ सुप्रतिष्ठिताय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

ॐ सर्वेभ्यो भगवद्गणाधिपतिभ्यो नमः स्वाहा

ॐ नित्येभ्यो नमः स्वाहा

ॐ मुक्तेभ्यो नमः स्वाहा

ॐ दिव्येभ्यो नमः स्वाहा

ॐ समस्तपरिवाराय श्रीमतेनारायणाय नमः स्वाहा

ॐ अस्मत्पितृपितामहप्रपितामहस्वरूपेभ्यः समस्तपरिवार विशिष्टेभ्योऽनिरुद्धप्रद्युम्नसंकर्षणवासुदेवेभ्यो नमः स्वाहा ॥

ततो गोघृतेन स्विष्टकृद्धोमः-

**स्विष्टकृद्धोमः**

**ॐ यदस्य कर्मणोऽअत्यरीरिचं यद्वान्यूनमिहाकरम् ।**
**अग्निष्टुत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु ।**
**ॐ अग्नये स्विष्टकृते स्वाहा** अग्नये स्विष्टकृते इदन्नमम ।
**ॐ भूः स्वाहा** अग्नय इदन्न मम । **ॐ भुवः स्वाहा** वायव इदन्न मम ।
**ॐ स्वः स्वाहा** सूर्याय इदं न मम ॥

ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासि सीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषा ꣳ सि प्रमुमुग्ध्यस्मत् ॥
ॐ अग्नींवरुणाभ्यां स्वाहा अग्नीवरुणाभ्यामिदन्न मम ।
ॐ सत्वन्नोऽअग्नेवमो भवोतिनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ।
अवयक्ष्वनो वरुण ꣳ रराणो वीहि मृडीक ꣳ सुहवोनऽएधि स्वाहा ॥
ॐ अग्नीवरुणाभ्यामिदन्न मम ।
ॐ अयश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि ।
अयानो यज्ञंवहास्ययानो धेहि भेषज ꣳ स्वाहा ॥
ॐ अग्नये अयसे स्वाहा अग्नय अयस इदन्न मम ॥
ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः।तेभिर्नोऽअद्यसवितोतद्विष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः॥
ॐ वरुणाय स्वाहा सवित्रे स्वाहा विष्णवे स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मरुद्भ्यः स्वाहा स्वर्केभ्यश्च स्वाहा
इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥
ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यम ꣳ श्रथाय ।
अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥
ॐ आदित्यायादितये स्वाहा इदं आदित्यायादितये न मम ।

## पूर्णाहुतिः

श्रुवाज्येन स्रुचं चतुःकृत्वः पूरयित्वा तत्र ताम्बूलपूगीफल नारिकेलं निधाय नववस्त्रेणाच्छाद्य चित्रतन्तुभिरावेष्ट्य पुनराज्येनाभ्यज्य पुष्पादिभिरलङ्कृत्य ब्रह्माणं च अलङ्कृत्य उत्तिष्ठन् मनसा यज्ञपुरुषं ध्यायन्–

**ॐ पूर्णः पश्चादुत पूर्णः पुरस्तादुन्मध्यतः पौर्णमासी जिगाय।**

**तस्या देवाऽअधिवसन्तऽउत्तमे नाकऽइह मादयन्ताम्।**

**ॐ सप्ततेऽअग्ने समिधः सप्तजिह्वा सप्तऽऋषयः सप्तधाम प्रियाणि।**

**सप्तहोत्रा सप्तधा त्वां यजन्ति सप्तयोनीरापृण स्वघृतेन॥**

**ॐ अग्नये पूर्णाय सप्तवते स्वाहा** अग्नये पूर्णाय सप्तवत इदन्न मम इति जुहुयात्–

**अथोत्तरपरिषेचनम्–**

जलपूर्णाम्प्रणीतां दक्षिणहस्तेनाऽऽदाय

**ॐ अदिते अनुमन्यस्व** इति कुण्डस्य दक्षिणतः प्राचीनाञ्जलधाराङ्कुर्यात्।

**ॐ अनुमते अनुमन्यस्व** इति पश्चिमत उदीचीनाञ्जलधाराङ्कुर्यात्।

**ॐ सरस्वते अनुमन्यस्व** इत्युत्तरतः प्राचीनाञ्जलधारां विधाय।

**ॐ देवसवितः प्रसुव** इति प्रागारभ्य प्रदक्षिणक्रमेण सर्वतो

जलधारया परिषिञ्चेत्। प्रणीतापात्रं स्वस्य पुरतो निधाय तत्र

**ॐ सदसि सन्मे भूयाः सर्वमसि सर्वम्मे भूयाः पूर्णमसि पूर्णम्मे भूयाः अक्षतमसि मा मेक्षेष्ठाः** इति मन्त्रेण जलान्तरं निनीय तज्जलं हस्ताभ्यामादाय

**ॐ देवा ऋषयोमार्जयन्ताम्** इति पूर्वस्यां किञ्चिज्जलन्निरस्येत्, एवं।

**ॐ मासाः पितरो मार्जयन्ता**मिति दक्षिणस्यां किञ्चिज्ज-लन्निरस्येत्।

**ॐ गृहाः पशवो मार्जयन्ता**मिति प्रतीच्यां किञ्चिज्जलन्निरस्येत्।

**ॐ आप ओषधयो वनस्पतयो मार्जयन्ता**मित्युदीच्याञ्च किञ्चिज्जलन्निरस्येत्।

**ॐ यज्ञःसंवत्सरो यज्ञपतिर्मार्जयन्ता**मित्यूर्ध्वायां दिशि किञ्चिज्जलं निरस्य।

**ॐ सुमित्रियानऽआपऽओषधयः सन्तु**

इति शिरसि पुरस्ताद्भूमौ च सहिरण्यं किञ्चिज्जलन्निरस्यावशिष्टजलेन

**ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽअस्मान्द्वेष्टि यञ्च वयं द्विष्मः॥**

इति प्रणीतां न्युब्जीकुर्यात्।

**<u>ततो ब्रह्मणे पूर्णपात्रं दत्वा</u>**

दशदिक्पालबलिं प्रदद्यात् तद्यथा—

दशपुटकेषु प्रज्वलितदीपसहितं पक्वान्नादिबलिं निधाय दशदिक्पालान् संपूज्य कर्मपात्रोदकं गृहीत्वा संकल्पं कुर्यात्–

**ॐ इन्द्रादिदशदिक्पालेभ्यः सायुधेभ्यः सशक्तिकेभ्यः सपरिवारेभ्यो नमः इमं बलिं समर्पयामि भो इन्द्रादिदशदिक्पालाः सायुधाः सशक्तिकाःसपरिवारा इमम्बलिङ्गृहणीध्वम्** । इति बलिं प्रदाय

## अथान्नादिदानम्[४] –

यजमानेन **भो ब्राह्मणा अर्घ्यादिकं सम्पादयिष्य** इत्युक्ते ब्राह्मणाः **सम्पादय**

इति वदेयुः मूलमन्त्रेण, अर्घ्यादिकं कुर्यात् ।

अथ भूस्वामिनः अग्रे पत्रपुटकादौ अर्घ्यादिकं दद्यात् ।

अथ विश्वेदेवादीनामग्रे पत्रपुटकादौ, अर्घ्यादिकं दद्यात् ।

अथ विश्वेदेवादीनांमग्रे चतुष्कोणं मण्डलङ्कृत्वा तत्र सजलोपस्कर घृतपक्वान्नादि) सिद्धान्नादिकन्निधाय सव्येनैव जलतिलकुशहस्तेन अन्नादिकं स्पृशन्–

**ॐ सोपस्करं सजलमिदमन्नादिकं श्राद्धसंरक्षकाय भूस्वामि स्वरूपिणे नारायणाय नमः**

इति मण्डले जलकुशादिकं भूमावुत्सृजेत् ।

अथ विश्वेदेवानाम्पुरतः चतुष्कोणमण्डलङ्कृत्वा

---

४ (अन्नदाने विशेषः– सांवत्सरिक पार्वणे–५, भूस्वामी–१, विश्वेदेव–१, पितृपितामहप्रपितामह–१+१+१–३)

सोपस्करं सजलमन्नादिकं विभज्य शुद्धपात्रादौ निधाय, अर्घ्यादिकमादाय–

(पितुः–)

ॐ [५] अद्यामुकगोत्राणाममुकामुकनाम्नामस्मत्पितृपितामह–प्रपितामहस्वरूपाणां प्रद्युम्नसङ्कर्षणवासुदेवानां समाराधनभूतेऽस्मिन् श्राद्धकर्म्मणि पुरुरवार्द्रवसंज्ञकविश्वेदेवा एतदर्घ्यादिकं वो नमः

(मातुः–) ॐ अद्यामुकगोत्राणाममुकामुकनाम्नीनामस्मत् मातृपितामहीप्रपितामहीस्वरूपाणां सत्याहिरण्याहरिणीनां वासुदेवसङ्कर्षणप्रद्युम्नसमेतानां समाराधनभूतेऽस्मिन् श्राद्धकर्म्मणि पुरुरवार्द्रवसंज्ञक विश्वेदेवा एतदर्घ्यादिकं वो नमः।

इति दत्वान्नशुद्ध्यर्थम्पुरुषसूक्तम्पठेत् । ततोऽन्नं दद्यात् विश्वेदेवानाम्पुरतः–

ॐ [६] अद्यामुकगोत्राणाममुकामुकनाम्नामस्मत्पितृपितामह–

---

५ ॐ अद्यामुकगोत्राणाममुकामुकनाम्नां सपत्नीकाना मस्मत्पितृपितामह प्रपितामहस्वरूपाणां तथामुकगोत्राणाममुकामुकनाम्नां सपत्नीकाना मस्मन्मातामहप्रमातामहवृद्धप्रमातामहस्वरूपाणां प्रद्युम्नसङ्कर्षणवासुदेवानां समाराधनभूतेऽस्मिन् अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि हरिण्यादि सहिता वासुदेवादय अर्घ्यपाद्यमाचमनीय स्नानीयवस्त्रोपवीतगन्धपुष्प धूप दीपनैवेद्यपुनराचमन ताम्बूलदक्षिणाप्रदक्षिणा नमस्कारा वो नमः। इति दत्वा,

६ ॐ अद्यामुकगोत्राणाममुकामुकनाम्नां सपत्नीकानामस्मत्पितृपितामह

प्रपितामहस्वरूपाणां सत्यादिसमेतानाम्
प्रद्युम्नसङ्कर्षणवासुदेवानां समाराधनभूते अस्मिन्
श्राद्धकर्म्मणि पुरुरवार्द्रवसंज्ञकविश्वेदेवा एतत्सजलं सव्यञ्जनं
हव्यं वो नमः।

अर्घ्यपाद्याचमनीयादीनि वो नमः । ततो वासुदेवादीनाम्पुरतः सोपस्करमन्नादिकं विभज्यार्घ्यादिकमादाय वासुदेवादिभ्यो दद्यात्-

(पितुः–)

ॐ ७ अद्यामुकगोत्राः अमुकामुकनामान
अस्मत्पितृपितामहप्रपितामहस्वरूपाः सत्या-
हिरण्याहरिणीसहिताः प्रद्युम्नसंकर्षणवासुदेवा
अर्घ्यपाद्याचमनादीनि वो नमः।

---

प्रपितामहस्वरूपाणां तथामुकगोत्राणाममुकामुकनाम्नां
सपत्नीकानामस्मन्मातामहप्रमातामहवृद्ध–प्रमातामहस्वरूपाणां
प्रद्युम्नसङ्कर्षणवासुदेवानां समाराधनभूतेऽस्मिन् श्राद्धकर्म्मणि
पुरुरवार्द्रवसंज्ञकविश्वेदेवा एतदर्घ्यादिकं वो नमः।
ॐ अद्यामुकगोत्राणाममुकामुकनाम्नां सपत्नीकानामस्मत्पितृपितामह
प्रपितामहस्वरूपाणां तथामुकगोत्राणाममुकामुकनाम्नां
सपत्नीकानामस्मन्मातामहप्रमातामहवृद्ध–प्रमातामहस्वरूपाणां
प्रद्युम्नसङ्कर्षणवासुदेवानां समाराधनभूतेऽस्मिन् श्राद्धकर्म्मणि
पुरुरवार्द्रवसंज्ञकविश्वेदेवा एतत्सजलं सव्यञ्जनं हव्यं वो नमः।
७ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्राः
अमुकामुकनामानः सपत्नीका अस्मतपितृपितामहप्रपितामहस्वरूपा
तथा अमुकगोत्राः अमुकामुकनामानः सपत्नीका अस्मन्मातामह
प्रमातामहवृद्धप्रमातामहस्वरूपाः सत्यादिसहिताः प्रद्युम्नसंकर्षणवासुदेवा
अर्घ्यपाद्याचमनादीनि वो नमः।

## [८]अथान्नादिकं स्पृशन् पठेत्–

**ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते ऽअमृतं जुहोमि स्वाहा।** इत्यालभ्य–

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधेपदम्। समूढमस्यपा ँ सुरे।**

ततो मण्डले तिलान् विकीर्य मूलं जपित्वा तिलकुशानादाय सजलं सोपस्करमन्नादिकं स्पृशन्–

(पितुः–)

**ॐ [९] अद्यामुकगोत्रायामुकनाम्ने अस्मत्पितृस्वरूपाय सत्या सहिताय प्रद्युम्नाय इदमन्नादिकं ते नमः**

**ॐ [१०] अद्यामुकगोत्राय अमुकनाम्ने अस्मत्पितामहस्वरूपाय हिरण्यासहिताय संकर्षणाय इदमन्नादिकं ते नमः।**

**ॐ [११] अद्यामुकगोत्रायामुकनाम्ने अस्मत्प्रपितामहस्वरूपाय**

---

८ (महालयपार्वणे तु – आहत्य नव भू–स्वामी–१, विश्वेदेवौ–२, पितृपितामहप्रपितामह–३, मातामहप्रमातामह वृद्धप्रमातामह–३=९)।

९ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्राय अमुकनाम्ने अस्मत्पितृस्वरूपाय सपत्नीकाय सत्यासहिताय प्रद्युम्नाय इदमन्नादिकं ते नमः।

१० अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्राय अमुकनाम्ने अस्मत् पितामहस्वरुपाय सपत्नीकाय हिरण्यासहिताय संकर्षणायेदमन्नादिकं ते नमः।

११अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धकर्म्मणिअमुकगोत्रायअमुकनाम्ने अस्मत्प्रपितामहाय सपत्नीकाय हरिणी सहिताय वासुदेवाय इदमन्नादिकं ते नमः।

**हरिणी सहिताय वासुदेवाय इदमन्नादिकं ते नमः ।**

**(मातुः–) अद्यामुकगोत्रायै अमुकनाम्न्यै अस्मत् मातृस्वरूपायै प्रद्युम्नसहितायै सत्यायै इदमन्नादिकं ते नमः ।**

**अद्यामुकगोत्रायै अमुकनाम्न्यै अस्मत्पितामहीस्वरूपायै संकर्षणसहितायै हिरण्यायै इदमन्नादिकं ते नमः ।**

**अद्यामुकगोत्रायै अमुकनाम्न्यै अस्मत्प्रपितामहीस्वरूपायै वासुदेवसहितायै हरिण्यै इदमन्नादिकं ते नमः ।**

ततः आचमनादिकं कारयित्वा प्रार्थयेत्–

**प्रद्युम्नसंकर्षणकवासुदेवस्वरूपकाः ।**

**पितापितामहश्चैव तथैव प्रपितामहाः ॥**

**(माता पितामहीचैव तथैव प्रपितामही ।)**

**गन्धपुष्पादिकं सर्वम् स्वीकुरुध्वं स्वधाहि वः ।**

**इदमर्घ्योदकं दिव्यं तुलसीदलमिश्रितम् ।**

---

अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्राय अमुकनाम्ने सपत्नीकाय अस्मन्मातामहस्वरूपाय सत्यासहिताय प्रद्युम्नाय इदमन्नादिकं ते नमः ।

अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्राय अमुकनाम्ने अस्मत्प्रमातामह स्वरुपाय सपत्नीकाय हिरण्यासहिताय संकर्षणाय इदमन्नादिकं ते नमः ।

अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्राय अमुकनाम्ने अस्मद्वृद्धप्रमातामहस्वरूपाय सपत्नीकाय हरिणी सहिताय वासुदेवाय इदमन्नादिकं ते नमः ।

**इदं हव्यादिकं सर्वम् स्वीकुरुध्वं नमोस्तु वः ॥**

**सत्याहिरण्या हरिणी सहितेभ्यः प्रद्युम्नसङ्कर्षणवासुदेवेभ्यो नमः ॥** ततः पिण्डदानं कुर्यात् ।

## पिण्डदानविधिः–

तत्र सांवत्सरिक पार्वणतिथौ (वार्षिकादिमरणतिथौ) व्यूहानां पुरत एकैक : पिण्डोदेयः ।

तत्र प्रद्युम्नादीनां पुरतश्चतुरस्रां प्रत्येकवेदीङ्कृत्वा, तत्र त्रिभिर्दर्भैः परिसमूह्य, गोमयोदकेनोपलिप्य, दर्भमूलेन दक्षिणोत्तरक्रमेण तिस्रो रेखा उल्लिख्य, अनामिकाङ्गुष्ठाभ्यामुद्धृत्य चैशान्यां क्षिपेत् । शुद्धजलेन प्रोक्षणङ्कृत्वा वेद्याङ्कुशानास्तीर्य पुष्पाणि निक्षिपेत् । ततः शुद्धगोदुग्धेन निर्मितं गोघृतयुतं सुकोमलं पिण्डीकरणोपयोगिपायसं सम्पाद्य, तद्द्वारा, आवश्यकान् पिण्डान्निर्माय, पृथक् स्थापयेत् । ततः किञ्चिच्छेषेण लम्बायमानं षडङ्गुलकं विकरङ्कृत्वा, पुटके निधाय जलेनाप्लाव्य । **अपसव्येन–**

**ये के चास्मत्कुले जाताः कनिष्ठाङ्गतिमाश्रिताः ।**

**त इमञ्चान्नमादाय गच्छन्तु स्वगतिं सुखम् ॥**

इति नैऋत्याङ्किञ्चिद्दूरे दद्यादुक्तञ्च

**स्वयोन्यां परबीजं यत् परयोन्यां स्वबीजकम् ।**

**तदेव विकरं नाम नैऋत्यां च षडङ्गुलम् ॥** इति **ततः सव्येन**

हस्तपादशुद्धिङ्कृत्वाचम्य प्राणायामं विधाय कार्यान्तरङ् कुर्यात् ॥

अथ वेद्यां तिलान् विकीर्य

**श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं जनार्दनम् ।**

**देशिकेन्द्रं गुरुं ध्यात्वा ततः श्राद्धं प्रवर्तये** ॥ इति वदेत् ततः कौशमासनं दद्यात्–

**ॐ [१२] अद्यामुकगोत्रा अमुकामुकनामान यथायोग्यसपत्नीका अस्मत्पित्राद्यात्मकाः प्रद्युम्नादय एतानि कौशेयान्यासनानि वो नमः** । अथ अर्घ्यादिकं दद्यात्–

**ॐ [१३] अद्यामुकगोत्रामुकामुकनामान यथायोग्यसपत्नीका**

---

१२ अद्यामुकगोत्रा अमुकामुकनामान यथायोग्यसपत्नीका अस्मत्पितृपितामह प्रपितामहात्मकाः प्रद्युम्नादयो अद्य कर्तव्य महालयपरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि एतानि कौशेयान्यासनानि वो नमः ।

पुनः अन्य कुशानादाय

अद्यामुकगोत्रा अमुकामुकनामान यथायोग्यसपत्नीका अस्मन् मातामहप्रमातामह वृद्धप्रमातामहाः प्रद्युम्नादयो अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि एतानि कौशेयान्यासनानि वो नमः ।

१३ अद्यामुकगोत्रा अमुकामुकनामान यथायोग्यसपत्नीका अस्मत्पित्राद्यात्मकाः प्रद्युम्नादयो अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि व एतदअर्घ्यमेतत्पाद्यमेतदाचमनीयमेतानि धूपदीपतुलसी दलादीनि संपद्यन्ताम् नममेति दद्यात् ।

अद्यामुकगोत्रा अमुकामुकनामान यथायोग्यसपत्नीका अस्मन्मातामहाद्यात्मकाः प्रद्युम्नादयो अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि व एतद अर्घ्यमेतत्पाद्यमेतदाचमनीयमेतानि धूपदीपतुलसी दलादीनि संपद्यन्ताम् नममेति

अस्मत्पित्राद्यात्मकाः प्रद्युम्नादयो व एषोऽर्ध्यमेतत्पाद्यमेतदाचमनीयमेतानि धूपदीपतुलसीदलादीनि संपद्यन्ताम् नमम इति दद्यात्। पिण्डार्थं अवनेजनम् [१४] दद्यात्।

अद्य ....... गोत्र ..... नामन् ..... प्रद्युम्नस्वरुप अद्यकर्तव्य सांवत्सरिकश्राद्धपिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

अद्य ....... गोत्र ..... नामन् ..... संकर्षणस्वरुप अद्यकर्तव्य सांवत्सरिकश्राद्धपिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

अद्य ....... गोत्र ..... नामन् ..... वासुदेवस्वरुप अद्यकर्तव्य

---

दद्यात्।

१४ ॐ अद्य अमुक गोत्र ..... अस्मत् पितः ....... अमुक नामन् .... प्रद्युम्नस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत पार्वण श्राद्धे पिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

ॐ अद्य अमुक गोत्र ..... अस्मत् पितामह ... अमुक नामन् .... संकर्षणस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत पार्वण श्राद्धे पिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

ॐ अद्य अमुक गोत्र ..... अस्मत् प्रपितामह ....... अमुक नामन् .... वासुदेवस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत पार्वण श्राद्धे पिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

ॐ अद्य अमुक गोत्र ..... अस्मत् मातामह ....... अमुक नामन् .... प्रद्युम्नस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत पार्वण श्राद्धे पिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

ॐ अद्य अमुक गोत्र ..... अस्मत् प्रमातामह .... अमुक नामन् ....... सङ्कर्षणस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत पार्वण श्राद्धे पिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

ॐ अद्य अमुक गोत्र ..... अस्मद् वृद्धप्रमातामह ....... अमुक नामन् .... वासुदेवस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत पार्वण श्राद्धे पिण्डस्थाने अत्रावनेनिक्ष्व ते नमः।

सांवत्सरिकश्राद्धपिण्डस्थाने अत्रावनेनिक्ष्व ते नमः ।

(मातुः)

अद्य ....... गोत्रे ..... नाम्नी ..... सत्यास्वरुपे अद्यकर्तव्य

सांवत्सरिकश्राद्धपिण्डस्थाने अत्रावनेनिक्ष्व ते नमः ।

अद्य ....... गोत्रे ..... नाम्नी ..... हिरण्यास्वरुपे अद्यकर्तव्य

सांवत्सरिकश्राद्धपिण्डस्थाने अत्रावनेनिक्ष्व ते नमः ।

अद्य ....... गोत्रे ..... नाम्नी ..... हरिणीस्वरुपे अद्यकर्तव्य

सांवत्सरिकश्राद्धपिण्डस्थाने अत्रावनेनिक्ष्व ते नमः ।

## पिण्डदानम्[१५] –

---

१५ ॐ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वणश्राद्धकर्म्मणि अमुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने सपत्नीकायास्मत्पित्रात्मकाय सत्यासहिताय प्रद्युम्नाय नमः स्वाहा ।
ॐ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने सपत्नीकायास्मत्पितामहात्मकाय हिरण्यासहिताय संकर्षणाय नमः स्वाहा
ॐ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने सपत्नीकायास्मत्प्रपितामहात्मकाय हरिणीसहिताय वासुदेवाय नमः स्वाहा
ॐ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने सपत्नीकायास्मन्मातामहात्मकाय सत्यासहिताय प्रद्युम्नाय नमः स्वाहा ।
ॐ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने सपत्नीकायास्मत्प्रमातामह्युत्मकाय हिरण्यासहिताय संकर्षणाय नमः स्वाहा ।
ॐ अद्य कर्तव्य महालयापरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि । अमुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने सपत्नीकायास्मद्वृद्धप्रमातामहात्मकाय

अथ सकुशजलपिण्डानादाय तत्तत्पुरतो वेद्यां दद्यात्। तद्यथा–

**ॐ अद्यामुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने अस्मत्पित्रात्मकाय प्रद्युम्नाय नमः स्वाहा।** एवम् पितामहप्रपितामहाभ्यामपि दद्यात्। तद्यथापुनरन्यम्पिण्डमादाय **अद्यामुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने अस्मत् पितामहात्मकाय संकर्षणाय नमः स्वाहा।** पुनरन्यम्पिण्डमादाय **अद्यामुकगोत्रायामुकप्रवरान्वितायामुकनाम्ने अस्मत्प्रपितामहात्मकाय वासुदेवाय नमः स्वाहा।**

(मातुः)

अद्य ....... गोत्रायै ..... नाम्न्यै ..... अस्मत् मात्रात्मिकायै सत्यायै नमः स्वाहा।

अद्य ....... गोत्रायै ..... नाम्न्यै ..... अस्मत् पितामह्यात्मिकायै हिरण्यायै नमः स्वाहा।

अद्य ....... गोत्रायै ..... नाम्न्यै ..... अस्मत् प्रपितामह्यात्मिकायै हरिण्यै नमः स्वाहा।

इति क्रमेण पिण्डान्दत्वा पुटकादौ जलमादाय–

प्रत्यवनेजनं[१६] दद्यात्।

---

**हरिणीसहिताय वासुदेवाय नमः स्वाहा।**

**१६ ॐ अद्य अमुक गोत्र ..... अस्मत् पितः ....... अमुक नामन् .... प्रद्युम्नस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत पार्वण श्राद्धे पिण्डे प्रत्यवनेनिक्ष्व ते नमः।**

**ॐ अद्य अमुक गोत्र ..... अस्मत् पितामह ... अमुक नामन् ....**

अद्य ....... गोत्र ..... नामन् ..... प्रद्युम्नस्वरुप अद्यकर्तव्य
सांवत्सरिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नमः ।

अद्य ....... गोत्र ..... नामन् ..... संकर्षणस्वरुप अद्यकर्तव्य
सांवत्सरिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नमः ।

अद्य ....... गोत्र ..... नामन् ..... वासुदेवस्वरुप अद्यकर्तव्य
सांवत्सरिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नमः ।

(मातुः)

अद्य ....... गोत्रे ..... नाम्नी ..... सत्यास्वरुपे अद्यकर्तव्य
सांवत्सरिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नमः ।

अद्य ....... गोत्रे ..... नाम्नी ..... हिरण्यास्वरुपे अद्यकर्तव्य

---

संकर्षणस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत
पार्वण श्राद्धे पिण्डे प्रत्यवनेनिक्ष्व ते नमः ।
ॐ अद्य अमुक गोत्र ..... अस्मत् प्रपितामह ....... अमुक
नामन् .... वासुदेवस्वरुप सपत्नीक अद्य कर्तव्य महालयापर
पक्षान्तर्गत पार्वण श्राद्धे पिण्डे प्रत्यवनेनिक्ष्व ते नमः ।
ॐ अद्य अमुक गोत्र ..... अस्मत् मातामह ....... अमुक नामन्
.... प्रद्युम्नस्वरुप सपत्नीक अद्य कर्तव्य महालयापर पक्षान्तर्गत
पार्वण श्राद्धे पिण्डे प्रत्यवनेनिक्ष्व ते नमः ।
ॐ अद्य अमुक गोत्र ..... अस्मत् प्रमातामह .... अमुक नामन्
....... सङ्कर्षणस्वरुप सपत्नीक अद्य कर्तव्य महालयापर
पक्षान्तर्गत पार्वण श्राद्धे पिण्डे प्रत्यवनेनिक्ष्व ते नमः ।
ॐ अद्य अमुक गोत्र ..... अस्मद् वृद्धप्रमातामह ....... अमुक
नामन् .... वासुदेवस्वरुप सपत्नीक अद्य कर्तव्य महालयापर
पक्षान्तर्गत पार्वण श्राद्धे पिण्डे प्रत्यवनेनिक्ष्व ते नमः ।

सांवत्सरिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नमः।

अद्य ....... गोत्रे ..... नाम्नी ..... हरिणीस्वरुपे अद्यकर्तव्य सांवत्सरिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नमः।

**ॐ[१७]अद्यामुकगोत्रेभ्यअमुकामुकनामभ्यअस्मत्पित्राद्यात्मकेभ्यः प्रद्युम्नादिभ्यो नम इदं जलं वो न मम।**

**मातुः जलदान संकल्प**

**ॐ अद्यामुकगोत्राभ्य अमुकामुकनाम्नीभ्य अस्मन् माताद्यात्मिकाभ्यः सत्यादिभ्यो इदं जलं वो न मम।**

इति दत्वा ततः पुन अर्घ्यपाद्याचमनगन्धपुष्पतुलसीदलादीनि पिण्डोपरि दत्वा गोदुग्धेन पिण्डान् स्नापयित्वा शुद्धवस्त्रेणाच्छादयेत्-

**ॐ नमो वः पितरोरसाय नमोवः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्मै तद्वः पितरो व्वासऽआधत्त**। इति, ततः

---

१७ ॐ अद्य कर्तव्य महालयपरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्रेभ्य अमुकामुकनामभ्य यथायोग्य सपत्नीकेभ्य अस्मत्पित्राद्यात्मकेभ्यः प्रद्युम्नादिभ्यो नम व इदं जलं नमम।

ॐ अद्य कर्तव्य महालयपरपक्षान्तर्गत पार्वण श्राद्धकर्म्मणि अमुकगोत्रेभ्य अमुकामुकनामभ्यो यथायोग्य सपत्नीकेभ्य अस्मन्मातामहाद्यात्मकेभ्यः प्रद्युम्नादिभ्य इदं जलं वो नमः।

**ॐ उद्वयं तमसस्परिस्वः पश्यन्तऽउत्तरम्।**

**देवन्देवत्रासूर्यमगन्मज्योतिरुत्तमम्।**

इति मन्त्रेण कर्पूरेण नीराजनङ्कृत्वा पिण्डस्याच्छादितवस्त्रोपरि

**कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात्।**

**करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि॥**

इत्युक्त्वा दक्षिणां दद्यात्।

ततः सपरिवारः पुष्पाण्यादाय प्रार्थयेत्–

**नमो विष्णुपदस्थेभ्यः स्वधा वः पितरो नमः।**

**हरये पितृनाथाय अग्निसोमात्मने नमः।**

**ससोमपात्मने विष्णो नमो बर्हिषदात्मने।**

**आसंसाराभिजनका अग्निष्वात्तास्तथाच्युत॥**

**पितामहाः सोमपास्त्वं त्वमन्ये प्रपितामहाः।**

**तुभ्यं नमो भगवते पितृमूर्तेऽच्युताय च॥**

**नारायणाय हंसाय विष्णो त्रिपुरुषात्मने।**

**मुक्त्वा त्वामेव भगवन् न नमाम्यर्चयामि च॥**

**न तर्पयामि विश्वेश नान्यमावाहयाम्यहम्।**

इति पिण्डदानम् –

**अतः परं तर्पणं महाभागवताराधनं च कुर्यात्**

## अथ तर्पणम्ः—

कर्मपात्रोदकमादाय देशकालादीन् संकीर्त्य

"तर्पणं कुरुते पित्रोः श्राद्धात् पूर्वं मृतेऽहनि।
निराशा पितरस्तस्य स च गच्छेत् अधोगतिम्॥"

अद्य अमुकगोत्रस्य (गोत्राणां वा) अमुकनाम्नः पित्रादेः अस्मिन् श्राद्धदिने भगवदात्मकदेवर्षिपितृतर्पणङ्करिष्ये

इति संकल्प्य हेमरौप्यादिपात्रे गन्धपुष्पतुलसीदलानि निक्षिप्य शुद्धजलं पूरयित्वा मूलमन्त्रं स्मृत्वा पतनाधारपात्रं निधाय पीताक्षतगन्धपुष्पादिना पात्रे देवानावाहयेत्। ततः–

ॐ सश्रीकं नारायणं तत्पार्षदान् देवर्षीञ्चावाहयामीत्युक्त्वा–

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
सभूमि गूँ सर्वतस्स्पृत्वात्यतिष्ठद्दशांगुलम्॥

ॐ पुरुष एवेद गूँ सर्वं यद्भूतं यच्चभाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति। इति मन्त्रद्वयं पठित्वा।

ॐ विश्वेदेवासऽआगत श्रृणुतामऽइम गूँ हवम्। एदम्बर्हि निषीदत॥

ॐ विश्वेदेवाःश्रृणुतेम गूँ हवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठा।
येऽअग्निजिह्वाऽउतवा यजत्राऽआसद्यास्मिन् बर्हिषि मादयध्वम्।

ततः– प्राङ्मुखः सन् सव्येन देवतीर्थेन मूलमन्त्रेण दशवारं तर्पयेत्–

ॐ सश्रीकं नारायणं तर्पयामि, ॐ भूस्तर्पयामि । ॐ भुवस्तर्पयामि ॐ स्वस्तर्पयामि। ॐ भूर्भुवः स्वस्तर्पयामि।इति तर्पयेत्।

ॐ सश्रीकं केशवं तर्पयामि।

ॐ सश्रीकं नारायणं तर्पयामि।

ॐ सश्रीकं माधवं तर्पयामि।

ॐ सश्रीकं गोविन्दं तर्पयामि।

ॐ सश्रीकं विष्णुं तर्पयामि।

ॐ सश्रीकं मधुसूदनं तर्पयामि।

ॐ सश्रीकं त्रिविक्रमं तर्पयामि।

ॐ सश्रीकं वामनं तर्पयामि।

ॐ सश्रीकं श्रीधरं तर्पयामि।

ॐ सश्रीकं हृषीकेशं तर्पयामि।

ॐ सश्रीकं पद्मनाभं तर्पयामि।

ॐ सश्रीकं दामोदरं तर्पयामि।

ॐ सश्रीकं वासुदेवं तर्पयामि।

ॐ सश्रीकं संकर्षणं तर्पयामि।

ॐ सश्रीकं प्रद्युम्नं तर्पयामि।

ॐ सश्रीकं अनिरुद्धं तर्पयामि।

ॐ सश्रीकं पुरुषोत्तमं तर्पयामि।

ॐ सश्रीकं अधोक्षजं तर्पयामि।

ॐ सश्रीकं नारसिंहं तर्पयामि।

ॐ सश्रीकं अच्युतं तर्पयामि।
ॐ सश्रीकं जनार्दनं तर्पयामि।
ॐ सश्रीकं उपेन्द्रं तर्पयामि।
ॐ सश्रीकं हरिं तर्पयामि।
ॐ सश्रीकं श्रीकृष्णं तर्पयामि।

## वैकुण्ठपार्षदतर्पणम्

ॐ आधारशक्तिं तर्पयामि।
ॐ प्रकृतिं तर्पयामि।
ॐ अखिलजगदाधारं कूर्मरूपिणं नारायणं तर्पयामि।
ॐ अनन्तं नागराजं तर्पयामि।
ॐ भूमिं तर्पयामि।
ॐ वैकुण्ठं दिव्यलोकं तर्पयामि।
ॐ वैकुण्ठं दिव्यजनपदं तर्पयामि।
ॐ वैकुण्ठं दिव्यनगरं तर्पयामि।
ॐ वैकुण्ठं दिव्यविमानं तर्पयामि।
ॐ आनन्दमयं दिव्यमण्डपरत्नं तर्पयामि।
ॐ आस्तरणरूपिणं अनन्तं नागराजं तर्पयामि।
ॐ धर्मं पीठपादं तर्पयामि।
ॐ ज्ञानं पीठपादं तर्पयामि।
ॐ वैराग्यं पीठपादं तर्पयामि।
ॐ ऐश्वर्यं पीठपादं तर्पयामि।
ॐ ऋग्वेदं पीठवाहकं तर्पयामि।

ॐ यजुर्वेदं पीठवाहकं तर्पयामि ।
ॐ सामवेदं पीठवाहकं तर्पयामि ।
ॐ अथर्ववेदं पीठवाहकं तर्पयामि ।
ॐ अधर्मं पीठगात्रं तर्पयामि ।
ॐ अज्ञानं पीठगात्रं तर्पयामि ।
ॐ अवैराग्यं पीठगात्रं तर्पयामि ।
ॐ अनैश्वर्यं पीठगात्रं तर्पयामि ।
ॐ एभिःपरिच्छिन्नतनुं सदसदात्मकं पीठभूतं नागराजं तर्पयामि ।
ॐ पीठस्योपरि अष्टदलपद्मं तर्पयामि ।
ॐ सोममण्डलं तर्पयामि ।
ॐ सूर्यमण्डलं तर्पयामि ।
ॐ वह्निमण्डलं तर्पयामि ।
ॐ विमलां चामरकरां तर्पयामि ।
ॐ क्रियां चामरकरां तर्पयामि ।
ॐ उत्कर्षिणीं चामरकरां तर्पयामि ।
ॐ ज्ञानां चामरकरां तर्पयामि ।
ॐ प्रह्वीं चामरकरां तर्पयामि ।
ॐ ईशानां चामरकरां तर्पयामि ।
ॐ सत्यां चामरकरां तर्पयामि ।
ॐ योगां चामरकरां तर्पयामि ।
ॐ अनुग्रहां चामरकरां तर्पयामि ।
ॐ जगत्प्रकृतिं चामरकरां तर्पयामि ।

ॐ सहस्रशीर्षाणमनन्तं तर्पयामि।
ॐ पुरतः पादपीठं तर्पयामि।
ॐ भगवद्पादुके तर्पयामि।
ॐ अस्मद्गुरून् तर्पयामि।
ॐ अस्मत्परमगुरून् तर्पयामि।
ॐ अस्मत्सर्वगुरून् तर्पयामि।
ॐ श्रीमन्तं रामानुजं तर्पयामि।
ॐ श्रीपराङ्कुशदासं तर्पयामि।
ॐ श्रीमद्यामुनमुनिं तर्पयामि।
ॐ श्रीराममिश्रं तर्पयामि।
ॐ श्रीपुण्डरीकाक्षं तर्पयामि।
ॐ श्रीमन्नाथमुनिं तर्पयामि।
ॐ श्रीमन्तं शठकोपं तर्पयामि।
ॐ श्रीमन्तं विष्वक्सेनं तर्पयामि।
ॐ श्रियं तर्पयामि।
ॐ श्रीधरं तर्पयामि।
ॐ सुदर्शनं हेतिराजं तर्पयामि।
ॐ पाञ्चजन्यं शंखाधिपतिं तर्पयामि।
ॐ कौमोदकीं गदाधिपतिं तर्पयामि।
ॐ नन्दकं खड्गाधिपतिं तर्पयामि।
ॐ शाङ्र्गञ्चापाधिपतिं तर्पयामि।
ॐ श्रीवत्सं श्रीनिवासं तर्पयामि।

ॐ कौस्तुभं सर्वरत्नाधिपतिं तर्पयामि।
ॐ वैजयन्तीं वनमालां तर्पयामि।
ॐ ह्रीं पुष्टीं तर्पयामि।
ॐ ऐं सरस्वतीं तर्पयामि।
ॐ द्रां निद्रां तर्पयामि।
ॐ क्लीं कान्तिं तर्पयामि।
ॐ कं पृथिवीं तर्पयामि।
ॐ गं गरुडं तर्पयामि।
ॐ किरीटं मुकुटाधिपतिं तर्पयामि।
ॐ मकराकृतिकुण्डले तर्पयामि।
ॐ कण्ठिकाभरणं तर्पयामि।
ॐ किरीटमालां आपीडात्मिकां तर्पयामि।
ॐ श्रीमत्तुलसीं तर्पयामि।
ॐ हारं सर्वाभरणाधिपतिं तर्पयामि।
ॐ काञ्चीगुणोज्वलम्पीताम्बरं तर्पयामि।
ॐ सर्वाणि भगवद्भूषणानि तर्पयामि।
ॐ सर्वान् भगवद्दिव्यायुधान् तर्पयामि।
ॐ सर्वाः भगवत्पादसंवाहिनीः तर्पयामि।
ॐ सर्वान् भगवत्परिकरान् तर्पयामि।
ॐ अनन्तं तर्पयामि।
ॐ विष्वक्सेनं तर्पयामि।
ॐ सूत्रवतीं तर्पयामि।

ॐ गं गजाननं तर्पयामि।

ॐ जं जयत्सेनं तर्पयामि।

ॐ हं हयाननं तर्पयामि।

ॐ कं कालप्रकृतिसंज्ञं तर्पयामि।

ॐ सर्वान् विष्वक्सेन परिजनान् तर्पयामि।

ॐ चण्डं तर्पयामि।

ॐ प्रचण्डं तर्पयामि।

ॐ भद्रं तर्पयामि।

ॐ सुभद्रं तर्पयामि।

ॐ जयं तर्पयामि।

ॐ विजयं तर्पयामि।

ॐ धातारं तर्पयामि।

ॐ विधातारं तर्पयामि।

ॐ कुमुदं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ कुमुदाक्षं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ पुण्डरीकं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ वामनं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ शङ्कुकर्णं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ सर्पनेत्रं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ सुमुखं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ सुप्रतिष्ठितं सायुधं सपरिवारं सशक्तिकं तर्पयामि।

ॐ सर्वान् भगवद्गणाधिपतीन् तर्पयामि।

ॐ नित्यान् तर्पयामि।

ॐ मुक्तान् तर्पयामि।

ॐ दिव्यान् तर्पयामि।

ॐ समस्तपरिवारविशिष्टं श्रीमन्तं नारायणं तर्पयामि।

ॐ अस्मत्पितृपितामहप्रपितामहात्मकान् सर्वपरिवारविशिष्टान् अनिरुद्ध प्रद्युम्न संकर्षण वासुदेवान् तर्पयामि।

अथ ब्रह्मादिदेवतर्पणम्

मिश्रदेवतर्पणावशिष्टजलेन शुद्धदेवतर्पणायोग्यत्वात् शुद्धदेवतर्पणार्थे पूर्वं शुद्धजलं निष्कास्य स्थापयित्वावशिष्टजलेन मिश्रदेवान्तर्पयेत्—

ॐ ब्रह्माणं तर्पयामि। ॐ स्थाणुं तर्पयामि।

ॐ मरुतं तर्पयामि। ॐ दक्षं तर्पयामि।

ॐ भृगुं तर्पयामि। ॐ धर्मम् तर्पयामि।

ॐ यमं तर्पयामि। ॐ मरीचिं तर्पयामि।

ॐ अङ्गिरसं तर्पयामि। ॐ अत्रिं तर्पयामि।

ॐ पुलस्त्यं तर्पयामि। ॐ पुलहं तर्पयामि।

ॐ क्रतुं तर्पयामि। ॐ वसिष्ठं तर्पयामि।

ॐ परमेष्ठिनं तर्पयामि। ॐ विवस्वन्तं तर्पयामि।

ॐ सोमं तर्पयामि। ॐ कर्दमं तर्पयामि।

ॐ क्रोधं तर्पयामि , ॐ विक्रीतं तर्पयामि।

अथ निवीती (यज्ञोपवीतं मालाकारं कृत्वा) कायतीर्थेन दद्यात्

ॐ ऋषीन् तर्पयामि। ॐ महर्षीन् तर्पयामि।

ॐ ब्रह्मर्षीन् तर्पयामि। ॐ देवर्षीन् तर्पयामि।

ॐ राजर्षीन् तर्पयामि । ॐ श्रुतर्षीन् तर्पयामि ।
ॐ सप्तर्षीन् तर्पयामि । ॐ काण्डर्षीन् तर्पयामि ।
ॐ ऋषीकान् तर्पयामि । ॐ ऋषिपत्नीः तर्पयामि ।
ॐ ऋषिपुत्रान् तर्पयामि । ॐ काण्वं बोधायनं तर्पयामि ।
ॐ आपस्तम्बं सूत्रकारं तर्पयामि ।
ॐ सत्याषाढं हिरण्यकेशिनं तर्पयामि ।
ॐ वाजसनेयिनं तर्पयामि । ॐ याज्ञवल्क्यं तर्पयामि ।
ॐ व्यासं तर्पयामि । ॐ आश्वलायनं शौनकं तर्पयामि ।
ॐ प्रणवं तर्पयामि । ॐ व्याहृतीः तर्पयामि ।
ॐ सावित्रीं तर्पयामि । ॐ गायत्रीं तर्पयामि ।
ॐ छन्दांसि तर्पयामि । ॐ ऋग्वेदं तर्पयामि ।
ॐ यजुर्वेदं तर्पयामि । ॐ सामवेदं तर्पयामि ।
ॐ अथर्वाङ्गिरसं तर्पयामि । ॐ इतिहासपुराणे तर्पयामि ।
ॐ सर्वदेवान् तर्पयामि । ॐ सर्वदेवजनान् तर्पयामि ।
ॐ सर्वभूतानि तर्पयामि ।

स्वपितृन् सव्येन पीताक्षतैरावाहयेत्

ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेवन्त्वस्मान् ॥
सव्येन देवतीर्थेन पूर्वाभिमुखोभूत्वा पूर्वं निष्कास्य स्थापितशुद्धजलेन स्वपितरं तर्प्पयेत्

अद्यामुकगोत्रममुकनामानं मम पित्रात्मकं प्रद्युम्नस्वरूपिणं भगवन्तं तर्पयामि,

ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरःसोम्यासः।
असुं यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु पितरो हवेषु॥
इति इत्युच्चार्य प्रथमाञ्जलिं दद्यात्।
ॐ अङ्गिरसो नः पितरो नवग्वाऽअथर्वाणो भृगवः सोम्यासः।
तेषां वय गूँ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥
इति द्वितीयाञ्जलिं दद्यात्।
ॐ आयान्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः।
अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेवन्त्वस्मान्॥
इति तृतीयाञ्जलिं दत्वा। अथ पितामहं तर्पयेत्–
ॐ अद्यामुकगोत्राममुकनामानं मम पितामहात्मकं संकर्षणस्वरूपिणं भगवन्तं तर्पयामि।
ॐ ऊर्ज्जंम्वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधास्थ तर्पयत मे पितृन्॥ इत्युच्चार्य प्रथमाञ्जलिं दद्यात्–
ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः। पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः।
अक्षन्न पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम्॥
इति द्वितीयाञ्जलिं दद्यात्–
ॐ ये चेह पितरो ये च नेह याँश्च विद्मयाँऽउ च नप्रविद्म।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञ गूँ सुकृतं जुषस्व॥
इति तृतीयाञ्जलिं दत्वा प्रपितामहं तर्पयेत्–
ॐअद्यामुकगोत्रममुकनामानं मम प्रपितामहात्मकं वासुदेवस्वरूपिणं भगवन्तं तर्पयामि,

**ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ।**

इत्युच्चार्य प्रथमाञ्जलिं दद्यात्—

**ॐ मधुनक्तमुतोषसो मधुमत्पार्थिव गूँ रजः । मधु द्यौरस्तु नः पिता ।**

इति द्वितीयाञ्जलिं दद्यात्—

**ॐ मधुमान्नो व्वनस्पतिर्मधु माँ२ऽअस्तु सूर्य्यः ।**

**माध्वीर्गावो भवन्तु नः ।** इति तृतीयाञ्जलिं दद्यात्—

अथ मातरं तर्पयेत्-

ॐ अद्यामुकगोत्राममुकनाम्नीं मम मातृस्वरूपां सत्यां तर्पयामि,

**ॐ आमाव्वाजस्यप्प्रसवो जगम्म्यादेमे द्यावापृथिवी विश्वरूपे ।**

**आमा गन्ताम्पितरामातराचामा सोमोऽअमृतत्वेन गम्यात् ॥**

इत्युच्चार्य प्रथमाञ्जलिं दत्वा मन्त्रावृत्या द्वितीयतृतीयाञ्जलिं दद्यात् ।

अथ पितामहीं तर्पयेत्-

ॐअद्यामुकगोत्राममुकनाम्नीं मम पितामहीस्वरूपां हिरण्यां तर्पयामि

इत्युच्चार्याञ्जलित्रयं दद्यात् । मन्त्रो मातृवत् । ततः प्रपितामहीं तर्पयेत्-

ॐअद्यामुकगोत्राममुकनाम्नीं मम प्रपितामहीस्वरूपां हरिणीं तर्पयामि

इत्युच्चार्य, पूर्ववदञ्जलित्रयं दद्यात् । मन्त्रो मातृवत् । अथ मातामहादींस्तर्पयेत्-

ॐअद्यामुकगोत्रममुकनामानं मम मातामहात्मकं प्रद्युम्नस्वरूपिणं भगवन्तं तर्पयामि।

**ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्मै तद्वः पितरो वासऽआधत्त ॥**

इत्युच्चार्याञ्जलित्रयं दद्यात्। अथ प्रमातामहं तर्पयेत्–

अद्यामुकगोत्रममुकनामानं मम प्रमातामहात्मकं संकर्षण स्वरूपिणं भगवन्तं तर्पयामि।

इत्युच्चार्य, नमो वः पितरो रसायेति मन्त्रेणाञ्जलि त्रयं दद्यात्–

अथ वृद्धप्रमातामहं तर्पयेत्–

अद्यामुकगोत्रममुकनामानं मम वृद्धप्रमातामहात्मकं वासुदेवस्वरूपिणं भगवन्तं तर्पयामि।

इत्युच्चार्य **नमोवः पितरोरसायेति** मन्त्रेण अञ्जलित्रयं दद्यात्।

अथ मातामहीं तर्पयेत्–

अद्यामुकगोत्राममुकनाम्नीं मम मातामहीस्वरूपां सत्यां तर्पयामि।

इत्युच्चार्यं, अञ्जलित्रयं दद्यात्। मन्त्रो मातृवत्। अथ प्रमातामहीं तर्पयेत्–

अद्यामुकगोत्राममुकनाम्नीं मम प्रमातामहीस्वरूपां हिरण्यां तर्पयामि।

इत्युच्चार्याञ्जलित्रयं दद्यात्। मन्त्रो मातृवत्। अथ वृद्धप्रमातामहीं तर्पयेत्–

अद्यामुकगोत्रामुकनाम्नीं मम वृद्धप्रमातामहीस्वरूपां हरिणीं तर्पयामि।

इत्युच्चार्याञ्जलित्रयं दद्यात्। मन्त्रो मातृवत्।

ततो गुर्वादिभ्यो देहसम्बन्धिभ्य आत्मसम्बन्धिभ्यश्च तर्पणं दद्यात्- अत्र भागवतानां चेत्तर्पणं सव्येनैव देवतीर्थेनैव च पूर्वाभिमुखेनोत्तराभिमुखेन वा दद्यात्। अभागवतानान्त्वपसव्येन पितृतीर्थेन दक्षिणाभिमुखेनैव दद्यात्।

अथ प्राचीनावीती (अपसव्येन) भगवत्तीर्थेन दक्षिणाभिमुखः सन् तर्पयेत्-

**ॐ पितृभ्यः स्वधा नमस्तर्पयामि।**

**ॐ पितामहेभ्यः स्वधा नमस्तर्पयामि।**

**ॐ प्रपितामहेभ्यः स्वधा नमस्तर्पयामि।**

**ॐ मातृभ्यः स्वधा नमस्तर्पयामि।**

**ॐ पितामहीभ्यः स्वधा नमस्तर्पयामि।**

**ॐ प्रपितामहीभ्यः स्वधा नमस्तर्पयामि।**

**ॐ मातामहेभ्यः स्वधा नमस्तर्पयामि।**

**ॐ मातुः पितामहेभ्यः स्वधा नमस्तर्पयामि।**

**ॐ मातुः प्रपितामहेभ्यः स्वधा नमस्तर्पयामि।**

**ॐ मातामहीभ्यः स्वधा नमस्तर्पयामि।**

**ॐ मातुः पितामहीभ्यः स्वधा नमस्तर्पयामि।**

**ॐ मातुः प्रपितामहीभ्यः स्वधा नमस्तर्पयामि।**

**ॐ आचार्येभ्यः स्वधा नमस्तर्पयामि।**

ॐ आचार्यपत्नीभ्यः स्वधा नमस्तर्पयामि ।
ॐ गुरुभ्यः स्वधा नमस्तर्पयामि ।
ॐ गुरुपत्नीभ्यः स्वधा नमस्तर्पयामि ।
ॐ सखिभ्यः स्वधा नमस्तर्पयामि ।
ॐ सखिपत्नीभ्यः स्वधा नमस्तर्पयामि ।
ॐ ज्ञातिभ्यः स्वधा नमस्तर्पयामि ।
ॐ ज्ञातिपत्नीभ्यः स्वधा नमस्तर्पयामि ।
ॐ अमात्येभ्यः स्वधा नमस्तर्पयामि ।
ॐ अमात्यपत्नीभ्यः स्वधा नमस्तर्पयामि ।

ताताम्बत्रितयं सपत्नजननी मातामहादित्रयं ।
सस्त्रिस्त्री तनयादि तातजननी स्वभ्रातरः सस्त्रियः ।
ताताम्बात्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः ।
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥

ततः ताताम्बेत्यादिश्लोकोक्तान् स्वसम्बन्धिनस्तर्पयेत् ।
ततो निम्नश्लोकैस्तर्पयेत्-

आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
पितृवंशे मृता ये च मातृवंशे तथैव च ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥
ते तृप्तिमखिला यान्तु ये चास्मत्तोयकांक्षिणः ।
येऽबान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः ॥
ते सर्वे तृप्तिमायान्तु मद्दत्तेनाम्बुनाखिलाः ।
देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ॥

**पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ।**
**जलेचरा भूमिचरा वाय्वावाहाराश्च जन्तवः ॥**
**ते तृप्तिमखिला यान्तु मद्दत्तेनाम्बुनाखिलाः ।**
**नरकेषु समस्तेषु यातनासु च ये स्थिताः ॥**
**तेषामाप्यायनायैतद् दीयते सलिलं मया ।**
**अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥**
**आब्रह्मभुवनाँल्लोकानिदमस्तु तिलोदकम् ।**
**यत्र क्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम् ॥**
**आब्रह्मभुवनाँल्लोकानिदमस्तु तिलोदकम् ।**

पीताक्षतैर्विसर्जनम्–

**ॐ ऊर्ज्जम्वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।**
**स्वधास्थ तर्पयत मे पितृन् । तृप्यत तृप्यत तृप्यत इति ।**

अथ अपसव्येन भूमौ वस्त्रनिष्पीडनम् ।

**ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।**
**ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥**

तर्पणपात्रे पवित्रविसर्जनं कर्तव्यम् ततः सव्यं कृत्वा–

**ॐ भूर्भुवः स्वः सर्वेभ्यो नमः**

इति सर्वान् नमस्कृत्य, मूलं जपन् सूर्यार्घ्यन्दद्यात् । ततः सूर्योपस्थानम्–

**ॐ ह गूँ सः शुचिषद्वसुरन्तरिक्षसद्धोता व्वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृत सद्व्योम सदब्जा गोजाऽऋतजाऽ अद्रिजाऽऋतं बृहत् ।**

अथ सूर्यन्नमस्कुर्यात् ।

**ॐ अग्ने नयसुपथा रायेऽअस्मान् विश्वानि देवव्वयुनानि विद्वान्।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं विधेम ॥**

परितो नमस्कुर्यात्–

**ॐ सर्वदिक्पालाद्यन्तर्यामिणे श्रीमन्नारायणाय नमः ।**

ततः सजलकरेण मुखं (मुखमण्डलं) विमृज्यात्–

**ॐ संवर्च्चसा पयसा सन्तनूभिरगन्महि मनसा स गूँ शिवेन।**
**त्वष्टा सुदत्रो व्विदधातु रायोनुमार्ष्टुतन्वो यद्विलिष्टम् ।**

ततोऽनामिकाङ्गुष्ठाभ्यां चक्षुः स्पर्शङ्कुर्यात्–

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्क्रमुच्चरत् ।**
**पश्येम शरदः शतं जीवेमशरदः शत गूँ श्रृणुयामः शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।**

अथ पीताक्षतान् तर्पणपात्रे विसृजेत्–

**ॐ देवा गातुविदो गातुं वित्वागातुमित ।**
**मनसस्पतऽइमन्देवयज्ञ गुं स्वाहा व्वातेधाः ॥**

इति ततः कायेन वाचेति समर्पणम् कुर्यात् ।

ॐ ब्रह्मणे नमः इति ब्रह्माणं गन्धादिभिः संपूज्य विसर्जयेत्

**ॐ स्तुता मया वरदा वेदमाता प्रचोदयन्ति पवने द्विजाताः ।**
**आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रयातु ब्रह्मलोकम् ॥**

**भगवन्देवदेवेश जगतामार्तिनाशन ।**
**व्रजस्व पूजामादाय पुनरागमनाय च ॥**

इति ब्रह्माणम्विसृज्य ततः परिधीनाधारसमिधः

परिस्तरणकुशाँश्चादाय

**ॐ समुद्रंवः प्रहिणोमि स्वां योनिमधिगच्छत।**
**अरिष्टास्माकं वीरामापरासेचिमत्पयः॥**

इति वह्नौ क्षिपेत् ततःप्राञ्जलिः प्रार्थयेत्।

**ॐ अग्ने नय सुपथारायेऽअस्मान्विश्वानि देववयुनानिविद्वान्।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं विधेम॥**
**चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।**
**हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः॥** हस्ते जलाक्षतानादाय यथाशक्तिकृतेनानेन होमकर्मणा श्रीयज्ञस्वरूपी श्रीमन्नारायणः परमात्मा प्रीयतां न मम।

इति जलाक्षतान् भूमौ निक्षिपेत्। ततः पीताक्षतैर्हवने आवाहितान्देवान् विश्वेदेवचतुर्व्यूहादीन् च विसर्जयेत्।

**ॐ यज्ञयज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छस्वाहा।**
**एषते यज्ञो यज्ञपते सहसूक्तवाकः सर्वम्वीरस्तं जुषस्वस्वाहा।**
**यदक्षरपदभ्रष्टं मात्राहीनं च यद् भवेत्।**
**तत्सर्वं क्षम्यतां देव प्रसीद पुरुषोत्तम॥**
**मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम्।**
**यद्धुतञ्च मयादेव परिपूर्णं तदस्तुते॥**
**यस्यस्मृत्या च नामोक्त्या जपहोमक्रियादिषु।**
**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥**
**प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।**
**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥**

इति तर्पण विधिः

# अथ महाभागवताराधना

महाभागवातान् ब्राह्मणान् हस्तपादादिशुद्धिं कारयित्वा शुभासने स्थापयित्वा पीताक्षतपुष्पाण्यादाय कर्ताअद्यामुकगोत्रा अमुकामुकनामान अस्मत्पितृपितामह प्रपितामहात्मकाः प्रद्युम्नादिस्वरूपा भो महाभागवताचार्या वो यथोपचारै अर्चयिष्ये इति प्रार्थयेत्।

ततोऽर्चयेत्यनुज्ञाते पादेषु पुष्पाक्षतान् समर्प्योत्तराभिमुखान् ब्राह्मणान् कर्ता पूर्वाभिमुखः सन् पुरुषसूक्तविधिना पूजयेत्- आवाहनमासनमर्घ्यम्पाद्यमाचमनं वस्त्रं यज्ञोपवीतं चन्दनं पुष्पं धूप दीपान् इत्येतानुपचारान् समर्पयेत्।

ततो ब्राह्मणान् गृहीत्वा भोजनासने पूर्वोत्तराभिमुखानुपवेशयेत्। भूमौ मण्डलोपरि कदल्यादीनां सपूर्वाग्राः पत्रावलीर्निक्षिप्य पात्रप्रोक्षणङ्कृत्वा अस्त्रमन्त्रेणान्नादिकञ्च प्रोक्षयेत् । अथ ब्राह्मणा यावत्परिवेषणं पितृसूक्तादिपठनपूर्वकं मूलं जपेयुः । तथा हि- बृ. ब्र. सं. पा. ४ अ. ४ ।

प्रोक्षयेदस्त्रमन्त्रेण भक्तं सुव्यञ्जनान्वितम् ॥११३॥
सर्वं संसाधितं किञ्चिद्भक्ष्यपानादिभोजनम् ।
चेतसा कल्पयेत्सर्वम्पितृणां तृप्तये तु तत् ॥११४॥
अस्त्रेण प्रणवेनैव पात्राणि क्षालयेत् क्रमात् ॥११५॥
प्रजपेयुर्द्विजास्तावद् वैष्णवाः स्वासनेषु च ॥ ११६॥
परिवेषणं तु यावत्स्यात् सूक्तानि हरि तुष्टये ॥ ११७॥

इति कर्ता क्रमेणपरिवेषणङ्कुर्यात् । प्रथमतो भोक्तुर्दक्षिणभागे जलपात्राणि निधाय ततो दधिक्षीरान्नं पानं गुडान्नं घृतपक्वान्नं

शुद्धान्नमवलेह्यादिकङ्घृतं व्यञ्जनमपूपम्फलमेवङ्क्रमेण परिवेष्य यस्य यस्य यद्यदिष्टं शास्त्रीयं तत्तद्दद्यात् । ततो भगवत्तीर्थन्तुलसीञ्च दत्वा गायत्रीं स्मरन् परिषेचनाय जलन्दद्यात् । ततो ब्राह्मणा अन्नं परिषिच्याचमनाय जलं गृहीत्वा–

**ॐ अमृतोपस्तरणमसी**त्याचामेयुः । ततः प्राणाहुतिमन्त्रपूर्वकं तान् यावत्पर्याप्तिम्भोजयेत् ।

शनैः शनैर्भोजयन् कठवल्लीं विष्णुसहस्रनामादिकं च पठेत् ततस्तृप्तिङ्कारयित्वा हस्तौ संपुटीकृत्य

भो अस्मत्पितृभूतभगवदात्मका भागवताचार्याः तृप्ताः स्थ इत्युक्त्वा तैः तृप्ताः स्म इत्युक्ते उत्तरापोशनं दद्यात्–

**ॐ अमृतापिधानमसी**त्युक्त्वा दद्यात् । ततः शेषान्नङ्कङ्कर्तव्यमिति पृच्छेत् ब्राह्मणा इष्टैः सह भुज्यतामिति वदेयुः । ततो हस्तान् गृहीत्वोत्थाय हस्तपादादिशुद्धिं कारयेत् । ततः शुभासनेषूपवेश्य दक्षिणा ताम्बूलादिभिः सत्कुर्यात् । श्रीपादतीर्थग्रहणयोग्यत्वे तद्गृहीत्वा गन्धपुष्पादिभिः संपूज्य प्रार्थयित्वााशीर्वादम्प्रार्थयेत्–

समस्तसंपद्समवाप्तिहेतवः

समुत्थितापत्कुलधूमकेतवःअसारसंसारसमुद्रसेतवः पुनन्तुमां ब्राह्मणपादपांसवः ॥

**दातारो नोऽभिवर्द्धतां वेदाः सन्ततिरेव च ।**

**श्रद्धा च नो माव्यगमत् बहुदेयञ्च नोऽस्तु ॥**

**दातारो वोभिवर्द्धन्तां वेदाः सन्ततिरेव च ।**

श्रद्धा च वो माव्यगमत् बहुदेयञ्च वोऽस्तु ॥
अथ पिण्डविसर्जनङ्कृत्वा विप्रान्प्रणम्य विसर्जयेत्–
ॐ वाजे वाजेवत वाजिनो नो धनेषु विप्राऽअमृताऽऋतज्ञाः ।
अस्यमद्ध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥
ततो बालवृद्धादिभ्यो दत्वा सबन्धुकः स्वयम्भुञ्जीत तद्रात्रौ भूमौ शयीत।

इति महाभागवताराधना विधिः ॥

पितृयागः विधिः समाप्तः ।

# परिशिष्टम्

## अथ पुण्याहवाचनम्

आग्नेयकोणे एकं कलशं[1] पुण्याहवाचनार्थे समलङ्कृत्य संस्थाप्य तत्र सुदर्शनमावाह्य आसनं समर्प्य आचक्राय स्वाहा हृदयाय नमः, विचक्राय स्वाहा शिरसे स्वाहा, सुचक्राय स्वाहा शिखायै वषट्, सूर्यचक्राय स्वाहा बलायकवचाय हुम्, ज्वालाचक्राय स्वाहा नेत्रत्रयाय वौषट्, सुदर्शनचक्राय स्वाहा अस्त्राय फट्। इति षडङ्गन्यासं कृत्वा षोडशोपचारैः आराध्य चतुरो ब्राह्मणान् दर्भहस्तान् पुरत उपवेश्यार्चयेत्—

**यजमानः** पुष्पाणि पान्तु **विप्राः** सौमनस्यमस्तु । **यजमानः** अक्षताः पान्तु

**विप्राः** अरिष्टमक्षतं चास्तु । **यजमानः** गन्धाःपान्तु **विप्राः** सौमङ्गल्यमस्तु। **यजमानः** सफलताम्बूलं पातु **विप्राः** ऐश्वर्यमस्तु। **यजमानः** दक्षिणाः पान्तु **विप्राः** बहुदेयञ्चास्तु। **यजमानः** भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये। **विप्राः** वाच्यताम् ३।

हस्ते हिरण्याक्षतोदकमादाय पूर्वोक्त प्रकारेण देशकालादीन् संकीर्त्य भगवदाज्ञया भगवत्प्रीत्यर्थम् यागोपकरणगृहशरीरादिशुद्ध्यर्थम्पुण्याहवाचनमहङ्करिष्यामि । इति सङ्कल्प्य जानुनी भूमौ निपात्याञ्जलिं बद्ध्वा प्रार्थयेत्—

१ हेमादिसंभवंकुम्भं मन्त्राद्भिः क्षालितान्तरम्।
चन्दनागरुकर्पूरधूपितं शोभनाकृतिम्॥
आवेष्टिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना।
अर्चितं गन्धपुष्पाद्यैः कूर्चासनसमन्वितम्॥
नारिकेलयुतं पञ्चपल्लवैः समलङ्कृतम्।
नवरत्नोदकं मन्त्री स्थापयेत्तारमुच्चरन्॥

व्रतजपतपः स्वाध्यायक्रतुदयादानदमनियमसम्पन्नानां तत्र भवताम् ब्राह्मणानाम् मनः समाधीयताम् । विप्राः समाहितमनसः स्म। यजमानः प्रसीदन्तु भवन्तः। विप्राः प्रसन्नास्स्मः। यजमानः भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये । विप्राः वाच्यताम् ३।

तत उदककुम्भं सव्यहस्ते निधाय दक्षिणहस्तेन पिधाय प्रार्थयेत्— **यजमानः** भो ब्राह्मणा अस्य ममामुककर्मणः पुण्याहं भवन्तो ब्रुवन्तु। **विप्राः** ॐ पुण्याहमस्तु ३। ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धताम्पुनर्ब्रह्माणो वसुनीथयज्ञैः । घृतेन त्वं तन्वं वर्धयस्वसत्याः सन्तु यजमानस्य कामाः ॥ यजमानः- भो ब्राह्मणा अस्य ममामुककर्मणः स्वस्ति भवन्तो ब्रुवन्तु, विप्राः- ॐ स्वस्तिरस्तु ३

ॐ स्वस्ति न इन्द्रो वृद्धश्श्रवाः स्वस्तिनः पूषा विश्ववेदाः। स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ।

**यजमानः**- भो ब्राह्मणा अस्य ममामुककर्मणः ऋद्धिं भवन्तो ब्रुवन्तु, **विप्राः**- ॐ ऋद्धिरस्तु ३

ॐ ऋद्ध्यामस्तोमं सनुयामवाजमानो मन्त्रं सरथे होपयाताम् । यशोनपक्वं मधुगोष्वन्तरा भूतांशोऽअश्विनो कामप्राः ॥ ततः सर्वे ब्रूयुः ॐ शान्तिरस्तु। ॐ पुष्टिरस्तु। ॐ तुष्टिरस्तु। ॐ ऋद्धिरस्तु। ॐ अविघ्नमस्तु। ॐ आयुष्यमस्तु ॐ। आरोग्यमस्तु। ॐ धनधान्यसमृद्धिरस्तु। ॐ गोब्राह्मणेभ्यः शुभमस्तु । ॐ सर्वं शोभनमस्तु।ॐ सर्वा : सम्पदःसन्तु। ॐ शुभानि वर्धन्ताम्।ॐ शान्तिः ३।

ततः कुशहस्तैश्चतुर्भिर्विप्रैः सह पुण्याहकलशमभिमन्त्रयेत् । प्रथमं वरुणसूक्तपवमानसूक्ताभ्यामभिमन्त्र्य पाञ्चरात्रागममन्त्रैरभिमन्त्रयेत्—

## वरुणसूक्तम्

ॐ हिरण्यवर्णाःशुचयःपावकायासुजातः सवितायास्वग्निः।
याऽअग्निं गर्भन्दधिरेसुवर्णास्तानऽआपःश गुँ स्योना भवन्तु ॥
ॐ यासा गुँ राजावरुणोयातिमध्ये सत्यानृतेऽअवपश्यञ्जनानाम् ।
याऽअग्निं गर्भन्दधिरे सुवर्णास्तानऽआपःश गुँ स्योना भवन्तु ॥
ॐ यासान्देवादिवि कृण्वन्ति भक्षं याऽअन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भन्दधिरे सुवर्णास्तानऽआपः श गुँ स्योना भवन्तु ॥
ॐ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचम्मे ।
घृतश्च्युतः शुचयो याः पावकास्तान आपः श गुँ स्योना भवन्तु ॥
ॐ आपोहिष्ठामयोभुवस्तानऽउर्ज्जे दधातन ।महेरणायचक्षसे ॥
ॐ योवः शिवतमोरसस्तस्यभाजयतेहनः ।उशतीरिवमातरः ॥
ॐ तस्माऽअरङ्गमामवोयस्यक्षयाजिन्वथ । आपोजनयथाचनः ॥
ॐ चित्पतिर्म्मा पुनातु वाक्पतिर्मापुनातु देवो मां सविता पुनात्वच्छिद्रेण पवित्रेणसूर्यस्यरश्मिभिः । तस्यते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥

ततःपवमानसूक्तेनाभिमन्त्रयेत्—

## पवमानसूक्तम्

ॐ पवमानस्सुवर्च्चनःपवित्रेण विचर्षणिः । यः पोता स पुनातु माम्॥ पुनन्तु मां देवजनाः पुनन्तु वसवो धिया।विश्वेदेवाः पुनीत मा जातवेदः पुनीहि माम् ॥ पावमानीः स्वस्त्ययनीः सुदुघाहि घृतश्च्युतः । ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतँहितम् ॥

पावमानीर्दिशन्तुनऽइमं लोकमथोऽअमुम् ।
कामान्समर्धयन्तु नो देवीर्देवैः समाहिता ॥
येन देवाः पवित्रेण आत्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥
प्राजापत्यं पवित्रं शतोद्याम गूँ हिरण्मयम् ।
तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥

इन्द्रः पुनीतिः सहमा पुनातु सोमः स्वस्त्या वरुणः समीच्या ।

यमो राजा प्रमृणाभिः पुनातु मा जातवेदामोर्जयन्त्या पुनातु ।

यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किञ्चिदन्यत्।
जातस्य यश्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि॥
ब्रह्मवधात् सुरापानात् स्वर्णस्तेयाद् वृषलीमैथुनसङ्गमात्।
गुरोर्दाराधिगमाच्च तत्पावमानीभिरहं पुनामि ॥

दुर्यष्टं दुरधीतं पापं यच्चाज्ञानकृता कृतम्।
अयाजिताश्च संयाज्यास्तत्पावमानीभिरहं पुनामि ॥
पावमानीः स्वस्त्ययनीर्याभिर्गच्छन्ति नान्दनम्।
पुण्यांश्च भक्ष्याभक्षयत्यमृतत्वञ्च गच्छति ॥
पावमानीः पितृन्देवान्ध्यायेद्यश्च सरस्वतीम्।
पितृंस्तस्योपवर्तेत क्षीरं सर्पिर्मधूदकम् ॥
पावमानं परं ब्रह्म शुक्रञ्ज्योतिः सनातनम्।
ऋषींस्तस्योपतिष्टेत क्षीरं सर्पिर्मधूदकम् ॥
पावमानं परं ब्रह्म ये पठन्ति मनीषिणः।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥
पाञ्चरात्रागममन्त्रैरभिमन्त्रयेत्—

## पाञ्चरात्रागममन्त्राः

ॐ दर्भैः स्पृशन्तु कलशं ब्राह्मणैः सह देशिकः।
ततश्च शुद्धिमन्त्राँस्तु पठेदेवं समाहितः ॥१ ॥
शुद्धयेऽस्तु परो देवो वासुदेवोऽस्तु शुद्धये।
सङ्कर्षणः शुद्धयेऽस्तु प्रद्युम्नश्चास्तु शुद्धये ॥२ ॥
शुद्धयेऽस्त्वनिरुद्धोऽपि केशवश्चास्तु शुद्धये।
नारायणोऽस्तु विश्वेशश्शुद्धये सर्वकर्मणाम् ॥३ ॥

शुद्धये माधवश्चास्तु सर्वलोकहिते रतः।
गोविन्दः शुद्धयेचास्तु परमात्मा सनातनः ॥४ ॥
शुद्धये विष्णुरस्त्वद्य शुद्धये मधुसूदनः ।
सर्वलोकहितो देवः शुद्धयेऽस्तु त्रिविक्रमः ॥५ ॥
वामनः शुद्धयेचास्तु श्रीधरोऽद्यास्तु शुद्धये ।
शुद्धयेऽस्तु हृषीकेशः पद्मनाभोऽस्तु शुद्धये ॥६ ॥
सदा दामोदरो देवः शुद्धयेऽस्तु जगत्पतिः ।
शुद्धये पद्मनाभोऽस्तु शुद्धयेऽस्तु सदा ध्रुवः ॥६ ॥
अनन्तः शुद्धये चास्तु शक्त्यात्मा चास्तु शुद्धये ।
सर्वकर्मसु चैवास्तु शुद्धये मधुसूदनः ॥७ ॥
सदा विद्याधिदेवोऽस्तु शुद्धये कपिलस्तथा ।
शुद्धये विश्वरूपोऽस्तु शुद्धयेऽस्तु विहङ्गमः ॥८ ॥
क्रोडात्मा शुद्धयेचास्तु शुद्धये बडवाननः ।
शुद्धयेऽस्तु सदा धर्मश्चास्तु वागीश्वरस्तथा ॥९ ॥
देव एकार्णवशयः शुद्धयेऽस्तु निरन्तरम् ।
शुद्धयेऽस्तु सदा देवः कूर्मः पातालधारकः ॥१० ॥
वाराहः शुद्धयेचास्तु नारसिंहोऽस्तु शुद्धये ।
अमृताहरणश्चास्तु शुद्धये सर्वकर्मणाम् ॥११ ॥

श्रीपतिः शुद्धये चास्तु शान्तात्मा चास्तु शुद्धये।
शुद्धये राहुजिच्चास्तु कालनेमिघ्न एव च ॥१२॥
पारिजातहरश्चास्तु वामनश्चास्तु शुद्धये।
सर्वत्र शुद्धयेचास्तु दत्तात्रेयो महाप्रभुः ॥१३॥
न्यग्रोधशायी भगवान् शुद्धये चास्तु सर्वदा।
एकश्रृङ्गतनुश्चास्तु वामनश्चास्तु शुद्धये ॥१४॥
त्रिविक्रमः शुद्धयेऽस्तु शुद्धयेऽस्तु नरस्सदा।
नारायणः शुद्धयेऽस्तु हरिःकृष्णश्च शुद्धये ॥१५॥
ज्वलत्परशुधृग्रामः शुद्धयेऽस्तु धनुर्धरः।
रामश्च शुद्धये चास्तु वेदविद्भगवाँस्तथा ॥१६॥
शुद्धयेऽस्तु सदा कल्की सर्वदोषक्षयङ्करः।
शुद्धयेऽस्तु सदा देवः पातालशयनः प्रभुः ॥१७॥
शुद्धये सन्तु सर्वेषां सर्वे सर्वत्र सर्वदा।
एते सर्वे सदा देवाः शान्तये सन्तु पूजिताः ॥१८॥
ऋद्धये पुष्टये सन्तु सिद्धये भक्तयेऽपि च।
शिवाय मुक्तये सन्तु वृद्धये सर्वकर्मणाम् ॥१९॥
मन्त्राणां देशिकानाञ्च स्थानानामपि सर्वदा।
पुत्रमित्रकलत्राणां दासीदासगवामपि ॥
वेदशास्त्रागमादीनां व्रतानामिष्टसम्पदाम्।
मनोरथानां सर्वेषां हितानां सन्तु सर्वदा ॥२१॥

आयुरारोग्यमेधानां धनधान्यादिसम्पदाम् ।
पुण्यानामणिमादीनां गुणानां श्रेयसामपि ॥ २२ ॥
राज्ञो जनपदस्यापि यजमानस्य मन्त्रिणाम् ।
वैष्णवानां विशेषेण परत्र हितमिच्छताम् ॥२३ ॥
पञ्चकालविशुद्धानां सत्वस्थानां शुभात्मनाम् ।
स्वस्त्यस्तु च शिवञ्चास्तु शुभञ्चास्तु पुनः पुनः ॥२४ ॥
अविघ्नमनिशञ्चास्तु दीर्घमायुष्यमस्तु वै ।
समाहितम्मनश्चास्तु सम्पदश्चोत्तरोत्तरम् ॥२५ ॥
पुण्याहं शुद्धयेचास्तु वासुदेवादि मूर्तयः ।
शङ्खचक्रगदापद्मयुक्तः सर्वेश्वरेश्वरः॥२६ ॥
प्रीयतां भगवान्देवो लाङ्गली प्रीयतां सदा ।
प्रद्युम्नः प्रीयतां नित्यमनिरुद्धः सुरेश्वरः॥२७॥
नारायणः सुरेशोऽपि कर्मणां पूरणाय च ।
न्यूनाधिकानां शान्त्यर्थम् प्रीयतां प्रीयतां विभुः ॥
पुण्याहं स्वस्ति ऋद्धिञ्च संवाच्य सहितो द्विजैः ।
आत्मानं प्रोक्षयेत् पश्चाद्यागोपकरणानि च ॥
येन देवा पवित्रेणेत्यादि मन्त्रान्पठन्गुरुः ।
एवं सर्वेषु यागेषु कुर्यात्पुण्याहवाचनम् ॥

इति पुण्याहं वाचयित्वातज्जलेनाम्रपल्लवयुक्तेन कुशकूर्चेनात्मानं यागोपकरणानि गृहादिकञ्च घण्टावादनपूर्वकं वक्ष्यमाणमन्त्रेण प्रोक्षयित्वा वास्तुसूक्तेन प्रोक्षयेत्–

ॐ येन देवाः पवित्रेण आत्मानं पुनते सदा।

तेन सहस्रधारेण पावमान्यः पुनन्तु माम्।

## अथ वास्तुसूक्तम्

ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः। यत्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ।

ॐ वास्तोष्पते प्रतरणोनऽएधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते सख्येस्याम पितेव पुत्रान्प्रतितन्नो जुषस्व ॥

ॐ वास्तोष्पते शग्मया संसदाते सक्षीमहिरण्मया गातुमत्या । पाहि क्षेमऽउतयोगेवरन्नो यूयं पात स्वस्तिभिः सदानः ॥

ॐ अमीवहावास्तोष्पते विश्वारूपाण्याविशन् । सखा सुसेवऽएधिनः शन्नो भव द्विपदे शञ्चतुष्पदे। इति मन्त्रैः सर्वतः प्रोक्षयित्वा ब्राह्मणानभ्यर्च्य वेदादिपारायणे नियोज्य कर्ता भगवत आराधनां कुर्यात्–

## श्रीपितृयागविधौ प्रमाणसंग्रहः

श्रीवैष्णवश्राद्धं पार्वणे एकोदिष्टे च पार्वणविधिना कार्यम्।

प्रत्यब्दं पार्वणं श्राद्धं मातापित्रोर्मृतेऽहनि। श्लोक १५२.१५३

अर्चयित्वाच्युतं भक्त्या पश्चात्कुर्याद्विधानतः ॥

वैष्णवानेव विप्रांस्तु सर्वकर्मसु योजयेत् ॥ बृ.हा.स्मृ.अ.९।

सपुत्रस्य न कर्त्तव्यमेकोद्दिष्टं कदाचन। ग.पु.प्रे.ख.अ.२६

सपिण्डीकरणादूद्ध्र्वम् यत्र यत्र प्रदीयते ॥ १६ ॥

तत्रतत्र त्रयंकार्यमन्यथा पितृघातकः।

त्रिभिः कुर्यादशक्तश्च पार्वणं मुनिनोदितम् ॥ १७ ॥

तद्दिने तद्दिने कुर्यात् पितामुखमुखान्यतः। अज्ञानाद्दिनमासानां तस्मात्पार्वणमिष्यते ॥१८॥

अर्वाक् संवत्सरात्सन्धौ पूर्णे संवत्सरेऽपि वा।

ये सपिण्डीकृताः प्रेतास्तेषां न स्यात् पृथक् क्रियाः ॥ ३० ॥

सपिण्डने कृते वत्स पृथक्त्वं तु विगर्हितम्।

यस्तु कुर्यात् पृथक् पिण्डं पितृहा सोऽभिजायते ॥ ३१ ॥

सपिण्डी करणे वृत्ते पृथक्त्वं नोपपद्यते।

पृथक् पिण्डे कृते पश्चात् पुनः कुर्यात् सपिण्डनम् ॥ ३२ ॥

सपिण्डीकरणङ्कृत्वा ह्येकोद्दिष्टं करोति यः।

आत्मानं च तथा प्रेतं स नयेत् यमशासनम् ॥ ३३ ॥ ग.पु.प्रे.ख.अ.४५

प्रत्यब्दं श्राद्धमेवं ते कथयामि खगेश्वर।

प्रत्यब्दं पार्वणे नैव कुर्यातां क्षेत्रजौरसौ ॥१॥

विधिना चेतरैरेवमेकोदिष्टं न पार्वणम्

अनग्ने च सुतौ स्यातामनग्नी क्षेत्रजौरसौ ॥२॥

एकोद्दिष्टं न कुर्यातां प्रत्यब्दं तौ तु पार्वणम्

यदा त्वन्यतरः साग्निः पुत्रो वाप्यथवा पिता ॥३॥

प्रत्यब्दं पार्वणम्मेव कुर्यातां क्षेत्रजौरसौ ॥४॥

दर्शकाले क्षयो यस्य प्रेतपक्षेऽथवा पुनः ॥५॥

प्रत्यब्दं पार्वणं कार्यं तस्य सर्वैः सुतैरपि ॥६॥

एकोद्दिष्टमपुत्राणां पुसां स्याद्योषितामपि ॥७॥

व.स्मृ.अ.६.३७६।७७।७८

प्रत्यब्दं पार्वणं कुर्यान्मातापित्रोर्मृतेऽहनि

अन्यथा कुरुते यस्तु ब्रह्महत्यां स विन्दति।

अकृत्वा पार्वणं श्राद्धं मातापित्रोर्मृतेऽहनि।

स चाण्डालो भवेत् सद्यो रौरवं नरकं व्रजेत्।

तस्मात् पित्र्यादिके पुत्रः श्राद्धं कुर्वीत पार्वणम्॥ अमायां तु विशेषेण चौलोपनयनादिषु।

सपिण्डोत्तरकालिकाब्दिकपार्वणादिश्राद्धेषु कर्ता चतुर्व्यूहान् संस्थाप्य स्वयमनिरुद्धप्रतिनिधिः सन् वासुदेवादीन् पूजयेतु - बृ.ब्र.सं.पा.४.अ.४

प्रद्युम्नादिधिया पुत्रस्त्वनिरुद्धः स्वयं यजेत्।

पितरो हि हरिः साक्षात् चतुर्व्यूहात्मकस्तु यः ॥
पितरः सर्वभूतानामस्माकञ्च मुने स्वयम् ।
भगवान् वासुदेवो हि मूलप्रकृतिरुच्यते ॥७॥
पिताहमस्य जगतो धाता माता पितामहः ॥९॥
दैवे पित्र्ये च भगवान् संपूज्यः परमिच्छताम् ॥११ ॥
नास्ति तस्मात्परोऽन्यो हि पितामाताऽथवा द्विज ॥२४॥
पिता पितामहश्चाथ प्रपितामह एव च ॥२५ ॥
तदन्तर्यामि यजनं वैष्णवानां निरूपितम् ॥२७॥
दैवे साक्षाद्धरिः पूज्यः शङ्खचक्रगदाधरः ।
अन्तर्यामिधिया पित्र्ये पूज्यः पित्रादिरूपतः ॥५१ ॥
तैस्तैर्मन्त्रैः प्रकर्तव्यमन्तर्यामिधिया तथा ।
प्रद्युम्नादिधिया पुत्रस्त्वनिरुद्धः स्वयं यजेत् ॥
वैष्णवानां गृहस्थानां कर्तव्यं दैवकर्मवत् ॥
इदन्तु वैष्णवं श्राद्धं मुन्यन्नेनैव वर्तयेत् । बृ.ब्र.सं.पा.४अ.४

गृहस्थवैष्णवानामनिवार्यत्वम्–

वैष्णवानां गृहस्थानां धर्मोऽयं पारमार्थिकः ॥३६॥
ज्ञानिनां तु फलं त्वेकं निर्दिष्टं दैवपित्र्ययोः ॥३९॥
दैवे साक्षाद्धरिः पूज्यः शङ्खचक्रगदाधरः ।
अन्तर्यामिधिया पित्र्ये पूज्यः पित्रादिरूपतः ॥५१॥

वैष्णवानां विशेषोऽयं दैवे पित्र्ये च कर्मणि । श्राद्धे ब्राह्मणाः–

पशुघातो न कर्तव्यो मुन्यन्नेन परागतिः ॥५४॥

न श्राद्धे ह्यामिषं देयं पितृणाञ्च कदाचन।

न चामिषाशिनः पित्र्ये यष्टव्याः श्राद्धकर्मणि ॥५५॥

वैष्णवैः सततं पूज्या वैष्णवा ब्राह्मणा द्विजाः ।

न च मांसाशिनः शैवाः शाक्ताश्चापि ह्यवैदिकाः ॥५६॥

अनूर्ध्वपुण्ड्रिणः शंखचक्रलाञ्छनवर्जिताः ।

भगवन्तं समाराध्य अग्निहोमं विधाय श्राद्धमारभेत्–

बृ.ब्र.सं.पा.४.अ.४

पूजयित्वा पुरादेवं तर्पयित्वा हुताशनम्।

प्रयुक्तेन विधानेन ततस्त्वाहूय वैष्णवान् ॥८१॥

प्रक्षालिताङ्घ्रीन् स्वाचान्तान् प्रोक्षितेनास्त्रवारिणा ।

रात्रौ स्त्रीसङ्गरहितान् विष्णुसूक्तप्रपाठकान् ॥८२॥

ब्राह्मणसंख्या यथासम्भवम् – बृ.ब्र.सं.पा.४.अ.४

पित्रादेर्वैष्णवाः प्रोक्ताश्चत्वारो वैश्वदेविकाः ।

द्वौ वापि दैविके प्रोक्तावेकैको वा न दोषभाक् ॥९३॥

वैष्णवपितरः ते पितृलोकेऽपि न सन्ति–

सर्वे चतुर्भुजा ज्ञेयाः शङ्खचक्रगदाधराः ॥९७॥

वैष्णवानां हि पितरो न वै नरकवासिनः ॥१००॥

पितृलोके न ते सन्ति परमैकान्तिनो हि ते ॥१०१॥

साक्षाद्वैकुण्ठनाथस्य द्वारदेशावलम्बिनः ॥१०२॥

स्वरूपञ्च तेषाम्–

प्रद्युम्नसंकर्षणकवासुदेवस्वरूपकाः ।

पितापितामहश्चैव तथैव प्रपितामहः ॥ १०३॥

वैष्णवानां श्राद्धकरणे विधिः। अकरणे प्रत्यवायश्च– बृ.हा.अ.११

कुर्यात् श्राद्धं विधानेन विष्णोराज्ञामनुस्मरन् ॥३२७ ॥

न कुर्याद् यो विधानेन पितृयज्ञं नराधमः ।

आज्ञातिक्रमणाद्विष्णोः पतत्येव न संशयः ॥३२८ ॥

प्रत्यब्दं पार्वणं श्राद्धं कुर्यात् पित्रोर्मृतेऽहनि ।

अन्यथा वैष्णवो याति ब्रह्महत्यां न संशयः ॥ ३२९॥

तैस्तैर्मन्त्रैः प्रकर्तव्यमन्तर्यामिधिया तथा ।

प्रद्युम्नादिधिया पुत्रस्त्वनिरुद्धः स्वयं यजेत् ॥१३४॥

वैष्णवैर्देवकार्यवत् कार्यम्पितृकार्यमपि–

वैष्णवानां गृहस्थानां कर्तव्यं दैवकर्मवत् ।

इदं तु वैष्णवं श्राद्धं मुन्यन्नेनैव वर्तयेत् ॥१३५॥

अवैष्णवानामिव न भवति वैष्णवानामयं श्राद्धविधिः–

बृ.ब्र.सं.पा.४.अ.४

वैष्णवानां विशेषोऽयं पित्र्ये कर्मणि वर्तते ॥५२॥

देवकर्मेव श्राद्धं कर्तव्यं वैष्णवैः–

वैष्णवानां गृहस्थानां कर्तव्यं दैवकर्मवत् ।

वैष्णवपुत्रं विनाऽवैष्णवपितॄणां क्रन्दनम्–

वारयिष्यति नः पातात् विना श्रीवैष्णवात्सुतात् ।

अस्माभिरर्जिते पुण्ये क्षयं जाते च कः पुनः ॥४१॥

वैष्णवतायाश्च्युतस्यापि वैष्णवेष्ट्या प्रायश्चित्तं कुर्यात्–

बृ.हा.अ.१०

वैष्णवतायाश्च्युतस्यापि कारयेद्दिष्टिमुत्तमाम् ॥

इत्यादि कुलस्य वैष्णवपुत्रेण वैष्णवेष्ट्या वैष्णवीकरणम्–

उद्दिश्याऽवैष्णवान् स्वस्वपितृनपि च वैष्णवः ।

य कुर्याद् वैष्णवीमिष्टिं भक्त्या परमया युतः ।१६०

वैष्णवत्वं कुलं सर्वं लभेतास्य न संशयः ॥१६१

सात्विकश्रुतिस्मृतिसिद्धं धर्मं यो न करोति स निन्दितः–

बृ.हा.स्मृ.अ. ११

श्रुतिस्मृत्युदितं धर्मं यस्त्यजेद् वैष्णवाधमः ।

स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः ॥ १६८॥

समस्तयज्ञभोक्तारं ज्ञात्वा विष्णुं सनातनम् ।

दैवं पित्र्यं तथा यज्ञं कुर्यान्न तु परित्यजेत् ॥१७१॥

एतद्विध्यनुसारमेव पूर्वैर्वैष्णवैर्देवपितृकर्मकृतम्–

वैशिष्ट्यम्पारमैकान्त्यमेतच्छास्त्रं ममाव्ययम् ।

भारद्वाजादयः सर्वे नृपाश्च जनकादयः ॥३५२॥

योगिनः सनकाद्याश्च नारदाद्याः सुरर्षयः ।

वसिष्ठाद्या वैष्णवाश्च विष्वक्सेनादयः सुराः ॥३५३॥

एतच्छास्त्रानुसारेण पूजयामासुरीश्वरम्।

परमं वैदिकं शास्त्रमेतद् वैष्णवमुत्तमम् ॥३५४॥

महाभागवतानां हि कर्तव्यमिदमुत्तमम्।

स्वरूपेणैव धर्मस्य त्यागे हानिर्भवेद् ध्रुवम् ॥३५५॥

श्राद्धे निषिद्धानि- बृ.ब्र.सं.अ.४.पा.४

नामिषं न मधु प्रोक्तं खड्गपात्रं न चैव हि ॥१३६॥

एकादश्यां निषेधः- बृ.ब्र.पा.४अ.४

नैकादश्यां प्रकर्तव्यं न तिर्यक्पुण्ड्रधारणम् ॥१३६॥

विष्णुशेषेण यष्टव्याः पितरो द्वादशीदिने।

अन्यथानिरयंयान्तिपितरोयेऽस्यजन्मदाः॥५३॥बृ.हा.अ.११

पित्रोः श्राद्धं प्रकुर्वीत नैकादश्यां द्विजोत्तमः।

द्वादश्यां तत्प्रकुर्वीत नोपवासदिने क्वचित् ॥३३१ ॥

विधिश्चायं तापादिपञ्चसंस्कारवतामेव नान्येषाम्। तेषामेव महाभागवतत्वात्-

अर्थपञ्चकतत्वज्ञाः पञ्चसंस्कारसंस्कृताः।

आकारत्रयसंपन्ना महाभागवताः स्मृताः ॥

चक्रलाञ्छनहीनेन वैष्णवत्वं न लभ्यते।

अपि च श्राद्धादौ न सगोत्रिणो यष्टव्याः।

होमान्ते पितृयागः बृ.ब्र.पा.४अ.३

होमान्ते पितृयागः स्यात् प्रद्युम्नादिधिया द्विजाः।

अवैष्णवस्यापि बृ.हा.अ.९.श्लो.४४८

अवैष्णवान्वये जातः कृत्वेष्टिं वैष्णवीं द्विजः ।

वैष्णवैः पञ्चसंस्कारैः संस्कृतो वैष्णवो भवेत् ॥

नावैष्णवो व्रजेन्मुक्तिं बहुशास्त्रश्रुतोऽपि वा ॥

हवनादिकं विधायैव श्राद्धं कर्तव्यम्

पितृन् यजति यः पूर्वं देवाँस्त्यक्त्वा तमोऽधिकः

पितरः तस्य तच्छ्राद्धं वर्जयन्त्यशुचिं यथा ॥

श्राद्धमात्रेषु सर्वेषु चान्द्रोमासः प्रशस्यते ।

चन्द्रसूर्यकयोर्योगे मुख्यं स्यादिति केचन ॥

असंभवे चान्द्रमासः प्रशस्तः स तु वैदिकः ॥

पारणे मरणे नृणां तिथिस्तात्कालिकी परा ।

मृतिकाले तिथिर्यास्यात् सा ग्राह्या पितृकर्मणि ॥ गौलाक्षिस्मृतिः

श्राद्धकाले यदा जाता पत्नी यस्य रजस्वला ।

प्रसूता वा नकार्ये च वैदिकं पैतृकं तदा ॥ वृद्धयमस्मृतिः

निपातो नैव सव्यस्यजानुनो विद्यते क्वचित् ।

सदा परिचरेद् भक्त्या पितृनप्यत्र दैववत् ॥

पितृभ्य इति दत्तेषु उपवेश्य कुशेषु च ।

गोत्रनामभिरामन्त्र्य पितृनर्घ्यम् प्रदापयेत् ॥

नात्रापसव्यकरणं नपित्र्यं तीर्थमिस्यते ।

पात्राणां पूरणादीनि दैवेनैव प्रदापयेत् ॥

दक्षिणाप्रवणे देशे दक्षिणाभिमुखस्य च।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्रविधिः स्मृतः॥
इदं शास्त्रं च गुह्यं च परिसंख्यानमेव च।
वसिष्ठोक्तं च यो वेद स श्राद्धं वेद नेतरः॥ गोभिलस्मृतिः
पितृक्षयाहे संप्राप्ते यदिकश्चिन्महालयः।
तदा क्षयाहः कर्तव्योऽपरेऽहनि महालयः॥
क्षयाहे च पितुर्मातुः पार्वणं पार्वणं कृतम्। प्रजापतिस्मृतिः
पत्नीपाकं यदा कुर्यात् पुत्रःपुष्पकुशान्हरेत्।
किं गयायां यदि श्राद्धं स्वकाले स्वगृहे भवेत्॥

दुग्धविचारः

माहिषं च दधि क्षीरं श्राद्धे वर्ज्यं प्रयत्नतः।
माहिषं मृतवत्सागोसूतिकागोश्च वर्जयेत्॥
प्राप्ते चाह्निककाले तु मध्यदेशगते रवौ।
द्रंष्ट्राविलग्नाँस्त्रीन्पिण्डान् विधाय सहसा प्रभुः॥
स्थापयामास वै पृथ्वां कुशानास्तीर्य नारद।
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि॥
महाभारत शान्तिपर्व अध्याय ३४५ श्लो १४/१५
इति शुभम्भूयात्॥






श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य
उभयवेदान्तप्रवर्तकाचार्य
श्रीमत्परमहंसपरिव्राजकाचार्य
अनन्तश्रीविभूषित त्रिदण्डी
पराङ्कुशाचार्य
(शठकोप) यतिराज
रामानुजजीयर स्वामीजी
महाराज

पुस्तक प्राप्ति स्थान –

**श्रीशुकदेव भागवत आश्रम**

**श्रीलक्ष्मीहरि मन्दिर**

गैंडाकोट–१, नवलपरासी (बर्दघाट सुस्तापूर्व)
गण्डकी प्रदेश, नेपाल
फोन: ०७८–५०१८९८


ISBN
9 789937 065313